# अनुक्रमणिका ।

# प्रथमः पाठः ।

1. These verses are taken from Raghuvans'a of Kālidāsa, Nitis'ataka of Bhartrihari, Venisanhāra of Bhatta Nārāyana, Kādambari of Bāna, Sanjivani of Mallināth and Subhāshita *Ratna Bhāndāgāra of Parab.*

## नमनम् ।

रजोजुषे जन्मनि सत्त्ववृत्तये
स्थितौ प्रजानां प्रलये तमःस्पृशे ।
अजाय सर्गस्थितिनाशहेतवे
त्रयीमयाय त्रिगुणात्मने नमः ॥१॥

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ २ ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात् ॥ ३ ॥

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥ ४ ॥

कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् ।
चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः ॥ ५ ॥

श्रवणाञ्जलिपुटपेयं विरचितवान् भारताख्यममृतं यः ।
तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे ॥ ६ ॥

जयन्ति जितमत्सराः परहितार्थमभ्युद्यताः
पराभ्युदयसुस्थिताः परविपत्तिखेदाकुलाः ।
महापुरुषसत्कथाश्रवणजातकौतूहलाः
समस्तदुरितार्णवप्रकटसेतवः साधवः ॥ ७ ॥

---

अनेकशो मृता दाराश्च । साम्प्रतं वंशहीनश्चाहम् । ततः केन-
चिद्धार्मिकेणाहमादिष्टः । दानधर्मादिकं चरतु भवानिति ।

तदुपदेशादिदानीमहं स्नानशीलो दाता वृद्धो गलितनखदन्तो
दयावांश्च । कथं न विश्वासभूमिः । उक्तं च—

इज्याध्ययनदानानि तपः सत्यं धृतिः क्षमा ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ३ ॥

तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति ॥ ४ ॥

मम चैतावांल्लोभविरहो येन स्वहस्तगतमपि सुवर्णकङ्कणं
यस्मै कस्मैचिद्दातुमिच्छामि । तथापि व्याघ्रो मानुषं खादतीति
लोकप्रवादो दुर्निवारः । यतः—

गतानुगतिको लोकः कुट्टनीमुपदेशिनीम् ।
प्रमाणयति नो धर्मे यथा गोघ्नमपि द्विजम् ॥ ५ ॥

मया च धर्मशास्त्राण्यधीतानि । शृणु—

मरुस्थल्यां यथा वृष्टिः क्षुधार्ते भोजनं तथा ।
दरिद्रे दीयते दानं सफलं पाण्डुनन्दन ॥ ६ ॥

प्राणा यथाऽऽत्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥ ७ ॥

अपरं च—

प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ ८ ॥

अन्यच्च—

मातृवत्परदारेषु परद्रव्येषु लोष्टवत्।
आत्मवत्सर्वभूतेषु यः पश्यति स पण्डितः॥ ९॥

त्वं चातीव दुर्गतः। तेन तत्तुभ्यं दातुं सयत्नोऽहम्। तथा चोक्तम्—

दरिद्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनम्।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः॥ १०॥

अन्यच्च—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः॥ ११॥

तदत्र सरसि स्नात्वा सुवर्णकङ्कणं गृहाण। ततो जातविश्वासो यावदसौ सरः स्नातुं प्रविशति तावदेव महापङ्के निमग्नः पलायितुमक्षमः। पङ्के पतितं दृष्ट्वा व्याघ्रोऽवदत्। अहह महापङ्के पतितोऽसि। अतस्त्वामहमुत्थापयामि। इत्युक्त्वा शनैः शनैरुपगम्य तेन व्याघ्रेण धृतः स पान्थोऽचिन्तयत्।

न धर्मशास्त्रं पठतीति कारणं
न चापि वेदाध्ययनं दुरात्मनः।
स्वभाव एवात्र तथातिरिच्यते
यथा प्रकृत्या मधुरं गवां पयः॥ १२॥

किंच—

अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया।
दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना॥ १३॥

तन्न मया भद्रं कृतं यदत्र मारात्मके विश्वासः कृतः । तथा
क्तम्—

नदीनां शस्त्रपाणीनां नखिनां शृङ्गिणां तथा ।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥ १४ ॥

अपरं च —

सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः ।
अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते ॥ १५ ॥

न्यच्च—

स हि गगनविहारी कल्मषध्वंसकारी
दशशतकरधारी ज्योतिषां मध्यचारी ।
विधुरपि विधियोगाद् ग्रस्यते राहुणाऽसौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ॥ १६ ॥

इति चिन्तयन्नेवासौ व्याघ्रेण व्यापादितः खादितश्च । अतः
ऽविचारितं कर्म न कर्तव्यम् ।

तथा च—

> भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान् ।
> अतिलौल्याद्बकः कश्चिन्मृतः कर्कटकग्रहात् ॥ ४ ॥

तावूचतुः कथमेतत् । सोऽब्रवीत् ।

अस्ति कस्मिंश्चित्प्रदेशे नानाजलचरसनाथं सरः । तत्र च कृताश्रयो बक एको वृद्धभावमुपागतो मत्स्यान् व्यापादयितुमसमर्थः । ततश्च क्षुत्क्षामकण्ठः सरस्तीर उपविष्टो मुक्ताफलसदृशैरश्रुप्रवाहैर्धरातलमभिषिञ्चन्रुरोद । एकः कुलीरकश्च नानाजलचरसमेतः समेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे । माम किमद्य त्वयाहारवृत्तिर्नानुष्ठीयते । केवलमश्रुपूर्णनेत्राभ्यां सनिःश्वासेन स्थीयते । स आह । वत्स सत्यमुपलक्षितं भवता । मया हि मत्स्यादनं प्रति परमवैराग्यतया सांप्रतं प्रायोपवेशनं कृतम् । तेनाहं समीपागतानपि मत्स्यान्न भक्षयामि । कुलीरकस्तच्छ्रुत्वा प्राह । किं तद्वैराग्यकारणम् । स प्राह । वत्स अहमस्मिन्सरसि जातो वृद्धिं गतश्च । तन्मयैतच्छ्रुतं यद् द्वादशवार्षिक्यनावृष्टिः सम्पद्यते लग्ना । कुलीरक आह । कस्मात्तच्छ्रुतम् । बक आह । दैवज्ञमुखात् । यत एष शनैश्चरो रोहिणीशकटं भित्त्वा प्रयास्यति । उक्तं च वराहमिहिरेण ।

> यदि रोहिण्याः शकटं भिनत्ति रविनन्दनो गगनवीथ्याम् ।
> द्वादशवर्षाणि तदा न हि वर्षति वासवो भूमौ ॥ ५ ॥

तदेतत्सरः स्वल्पतोयं वर्तते । शीघ्रं शोषं यास्यति ।

अस्मिञ्छुष्के यैः सहाहं वृद्धिं गतः सदैव क्रीडितश्चैते सर्वे तोयाभावान्नाशं यास्यन्ति । तदेषां वियोगं द्रष्टुमहमसमर्थः । तेनैतत्प्रायोपवेशनं कृतम् । साम्प्रतं सर्वेषां स्वल्पजलाशयानां जलचरा गुरुजलाशयेषु स्वस्वजनैर्नीयन्ते केचिच्च मकरगोधाशिशुमारजलहस्तिप्रभृतयः स्वयमेव गच्छन्ति । अत्र पुनः सरसि ये जलचरास्ते निश्चिन्ताः सन्ति तेनाहं विशेषाद्रोदिमि यद्बीजशेषमात्रमप्यत्र नोद्धरिष्यति । ततः स तदाकर्ण्यान्येषामपि जलचराणां तत्तस्य वचनं निवेदयामास । अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छपप्रभृतयोऽभ्युपेत्य तं पप्रच्छुः । माम अस्ति कश्चिदुपायो येनास्माकं रक्षा भवति । बक आह । अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलसनाथं सरः पद्मिनीखण्डमण्डितं यच्चतुर्विंशत्यापि वर्षाणामवृष्ट्या न शोषमेति । तद्यदि मम पृष्ठं कश्चिदारोहति तदहं तं तत्र नयामि ।

अथ ते तत्र विश्वासमापन्नास्तात मातुल भ्रातरिति ब्रुवाणा अहं पूर्वमहं पूर्वमिति समन्तात्परिवव्रुः । सोऽपि दुष्टाशयः क्रमेण तान्मत्स्यानारोप्य जलाशयस्य नातिदूरे शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि जलाशयं समासाद्य जलचराणां मिथ्यावार्तासन्देशकैर्मनांसि रञ्जयन्नित्यमेवाहारवृत्तिमकरोत् । अन्यस्मिन् दिने स कुलीरकेणोक्तः । माम मया सह ते प्रथमः स्नेहसंभाषः संजातः । तत्किं मां परित्यज्यान्यान्नयसि । तस्मादद्य मे प्राणत्राणं कुरु । तदाकर्ण्य सोऽपि दुष्टा-

सार्धमन्यत्रानयामि । निर्विघ्नोऽहं मत्स्यभोजनेन । तदहं कुलीरं स्वच्छजलाशये करोमि ।

इति विचिन्त्य तं पृष्ठे समारोप्य तां वध्यशिलामुद्दिश्य प्रस्थितः । कुलीरकोऽपि दूरादेवास्थिपर्वतं शिलाश्रयमवलोक्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत् । माम कियद्दूरे स जलाशयः । मदीयभारेणातिश्रान्तस्त्वं तत्कथय । सोऽपि मन्दधीर्जलचरोऽय-मिति मत्वा स्थले न प्रभवतीति सस्मितमिदमाह । कुलीरक कुतोऽन्यो जलाशयः । मम प्राणयात्रेयम् । तस्मात्स्मर्यतामात्मनोऽभीष्टदेवता । त्वामप्यस्यां शिलायां निक्षिप्य भक्षयिष्यामि । इत्युक्तवति तस्मिन्स्ववदनदंशाग्रेण मृणालनालधवलायां मृदुग्री-वायां गृहीतो मृतश्च ।

अथ स तां बकग्रीवां समादाय शनैः शनैस्तज्जलाशयमाससाद । ततः सर्वैरेव जलचरैः पृष्टः । भोः कुलीरक किंनिमित्तस्त्वं पश्चादायातः । स मातुलोऽपि नायातः । तत्किं चिरयति । वयं सर्वे सोत्सुकाः कृतक्षणास्तिष्ठामः । एवं तैरभिहिते कुलीरकोऽपि विहस्योवाच । मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः । तन्मयाऽऽयुःशेषतया तस्य विश्वासघातकस्याभिप्रायं ज्ञात्वा ग्रीवेयमानीता तदलं सम्भ्रमेण । अधुना सर्वजलचराणां क्षेमं भविष्यति ।

अतोऽहं ब्रवीमि भक्षयित्वा बहून्मत्स्यानिति। वायस आह भद्र तत्कथय कथं स दुष्टसर्पो वधमुपैष्यति । शृगाल आह गच्छतु भवान्किंचिन्नगरं राजाधिष्ठानम् । तत्र कस्यापि धनिन राजामात्यादेः प्रमादिनः कनकसूत्रं हारं वा गृहीत्वा तत्कोट प्रक्षिप येन सर्पस्तद्ग्रहणेन वध्यते । अथ तत्क्षणात्काकः काकी च तदाकर्ण्यात्मेच्छयोत्पतितौ । ततश्च काकी किंचित्सरः प्राप यावत्पश्यति तावत्तन्मध्ये कस्यचिद्राज्ञोऽन्तःपुरं जलासन्नं न्यस्त कनकसूत्रं मुक्तमुक्ताहारवस्त्राभरणं जलक्रीडां कुरुते । अथ स वायसी कनकसूत्रमेकमादाय स्वगृहाभिमुखं प्रतस्थे । ततश्च कञ्चुकिनो वर्षधराश्च तन्नीयमानमुपलक्ष्य गृहीतलगुडाः सत्वर मनुययुः । काक्यपि सर्पकोटरे तत्कनकसूत्रं प्रक्षिप्य सुदूरमव स्थिता। अथ यावद्राजपुरुषास्तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति तावत्कृष्णसर्पः प्रसारितभोगस्तिष्ठति। ततस्तं लगुडप्रहारेण हत्वा कनकसूत्रमादाय यथाभिलषितं स्थानं गताः। वायसदम्पती अपि ततः परं सुखेन वसतः ।

—पंचतन्त्र

## चतुर्थः पाठः।

### अग्निमुखो मत्कुणः।

न ह्यविज्ञातशीलस्य प्रदातव्यः प्रतिश्रयः।
मत्कुणस्य च दोषेण हता मन्दविसर्पिणी ॥ १ ॥

अस्ति कस्यचिन्महीपतेर्मनोरमं शयनस्थानम्। तत्र श्वेततरपटयुगलमध्यसंस्थिता मन्दविसर्पिणी यूका प्रतिवसति स्म। सा च तस्य महीपते रक्तमास्वादयन्ती सुखेन कालं नयमाना तिष्ठति। अन्येद्युश्च तत्र शयने क्वचिद् भ्राम्यन्नग्निमुखो नाम मत्कुणः समायातः। अथ तं दृष्ट्वा सा विषण्णवदना प्रोवाच। भो अग्निमुख कुतस्त्वमत्रानुचितस्थाने समायातः। तद्यावन्न कश्चिद्वेत्ति तावच्छीघ्रं गम्यतामिति। स आह। भगवति गृहागतस्यासाधोरपि नैतद्युज्यते वक्तुम्। उक्तं च—

एह्यागच्छ समाश्वसासनमिदं कस्माच्चिराद् दृश्यसे
का वार्ता ह्यति दुर्बलोऽसि कुशलं प्रीतोऽस्मि ते दर्शनात्।
एवं नीचजनेऽपि युज्यति गृहं प्राप्ते सतां सर्वदा
धर्मोऽयं गृहमेधिनां निगदितः स्मार्तैर्लघुः स्वर्गदः ॥ २ ॥

अपरं मयानेकमानुषाणामनेकविधानि रुधिराण्यास्वादितान्याहारदोषात्कटुतिक्तकषायाम्लरसास्वादानि न च कदाचिन्मधुररक्तं समास्वादितम्। तद्यदि त्वं प्रसादं करोषि तदस्य नृपतेर्विविधव्यञ्जनान्नपानचोष्यलेह्यस्वाद्वाहारवशादस्य शरीरे यन्मिष्टं रक्तं संजातं तदास्वादनेन सौख्यं सम्पादयामि जिह्वाया इति। उक्तं च—

अतोऽहं ब्रवीमि भक्षयित्वा बहून्मत्स्यानिति। वायस आह। भद्र तत्कथय कथं स दुष्टसर्पो वधमुपेष्यति । शृगाल आह। गच्छतु भवान्किंचिन्नगरं राजाधिष्ठानम् । तत्र कस्यापि धनिनो राजामात्यादेः प्रमादिनः कनकसूत्रं हारं वा गृहीत्वा तत्कोटरे प्रक्षिप येन सर्पस्तद्ग्रहणेन वध्यते । अथ तत्क्षणात्काकः काकी च तदाकर्ण्यात्मेच्छयोत्पतितौ । ततश्च काकी किंचित्सरः प्राप्य यावत्पश्यति तावत्तन्मध्ये कस्यचिद्राज्ञोऽन्तःपुरं जलासन्नं न्यस्तकनकसूत्रं मुक्तमुक्ताहारवस्त्राभरणं जलक्रीडां कुरुते । अथ सा वायसी कनकसूत्रमेकमादाय स्वगृहाभिमुखं प्रतस्थे । ततश्च कञ्चुकिनो वर्षधराश्च तन्नीयमानमुपलक्ष्य गृहीतलगुडाः सत्वरमनुययुः । काक्यपि सर्पकोटरे तत्कनकसूत्रं प्रक्षिप्य सुदूरमवस्थिता। अथ यावद्राजपुरुषास्तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति तावत्कृष्णसर्पः प्रसारितभोगस्तिष्ठति। ततस्तं लगुडप्रहारेण हत्वा कनकसूत्रमादाय यथाभिलषितं स्थानं गताः। वायसदम्पती अपि ततः परं सुखेन वसतः ।

—पंचतन्त्रे

---

रंकस्य नृपतेर्वापि जिह्वासौख्यं समं स्मृतम् ।
तन्मात्रं च स्मृतं सारं तदर्थं यतते जनः ॥ ३ ॥

यद्येव न भवेल्लोके कर्मजिह्वाप्रतुष्टिदम् ।
तन्न भृत्यो भवेत्कश्चित्कस्यचिद्वशगोऽथवा ॥ ४ ॥

यदसत्यं वदेन्मर्त्यो यद्वाऽसेव्यं च सेवते ।
यद्गच्छति विदेशं च तत्सर्वमुदरार्थतः ॥ ५ ॥

तन्मया गृहागतेन बुभुक्षया पीड्यमानेनापि त्वत्सकाशाद्भोजनं लभ्यम् । तत्र त्वयैकाकिन्यास्य भूपते रक्तभोजनं कर्तुं युज्यते । तच्छ्रुत्वा मन्दविसर्पिण्याह । भो मत्कुण अस्य नृपतेर्निद्रावशं गतस्याहं रक्तमास्वादयामि । पुनस्त्वमग्निमुखश्चपलश्च । तद्यदि मया सह रक्तपानं करोषि तत्तिष्ठ । अभीष्टतररक्तमास्वादय । सोऽब्रवीत् । भगवति एवं करिष्यामि । यावत्त्वं नास्वादयसि प्रथमं नृपरक्तं तावन्मम देवगुरुतः शपथः स्याद्यदि तदास्वादयामि । एवं तयोः परस्परं वदतोः स राजा तच्छयनमासाद्य प्रसुप्तः । अथासौ मत्कुणो जिह्वालौल्योत्कृष्टौत्सुक्याज्जाग्रतमपि तं महीपतिमदशत् । अथवा साध्विदमुच्यते ।

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा ।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥ ६ ॥

यदि स्याच्छीतलो वह्निः शीतांशुर्दहनात्मकः ।
न स्वभावोऽत्र मर्त्यानां शक्यते कर्तुमन्यथा ॥ ७ ॥

अथासौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेवोत्थितः । अहो ज्ञायतामत्र प्रच्छादनपटे मत्कुणो यूका वा नूनं तिष्ठति येनाहं दष्ट इति । अथ ये कञ्चुकिनस्तत्र स्थितास्ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मदृष्ट्या वीक्षांचक्रुः । अत्रान्तरे स मत्कुणश्चापल्यात्खट्वान्तं प्रविष्टः । सा मन्दविसर्पिण्यपि वस्त्रमध्यान्तर्गता तैर्दृष्टा व्यापादिता च ।

—पञ्चतन्त्रे

---

## पञ्चमः पाठः ।

5 Rāmāyana is written by the great sage, Valmiki, long before the tenth Century B C He is a poet mentioned in the Vedic Literature. The work is well known to every Sanskrit student. It is the first court epic—a Mahākavya.

### अयोध्यावर्णनम् ।

कोसलो नाम मुदितः स्फीतो जनपदो महान् ।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ १ ॥
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ २ ॥
आयता दश च द्वे च योजनानि महापुरी ।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ३ ॥
राजमार्गेण महता सुविभक्तेन शोभिता ।
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ४ ॥
तां तु राजा दशरथो महाराष्ट्रविवर्धनः ।
पुरीमावासयामास दिवि देवपतिर्यथा ॥ ५ ॥

रंकस्य नृपतेर्वापि जिह्वासौख्यं समं स्मृतम् ।
तन्मात्रं च स्मृतं सारं तदर्थं यतते जनः ॥ ३ ॥

यद्येव न भवेल्लोके कर्मजिह्वाप्रतुष्टिदम् ।
तदा भृत्यो भवेत्कश्चित्कस्यचिद्वशगोऽथवा ॥ ४ ॥

यदसत्यं वदेन्मर्त्यो यद्वाऽसेव्यं च सेवते ।
यद्गच्छति विदेशं च तत्सर्वमुदरार्थतः ॥ ५ ॥

तन्मया गृहागतेन बुभुक्षया पीड्यमानेनापि त्वत्सकाशाद्भोजनं लभ्यम् । तत्र त्वयैवाकिन्यास्य भूपते रक्तभोजनं कर्तुं युज्यते । तच्छ्रुत्वा मन्दविसर्पिण्याह । भो मत्कुण अस्य नृपतेर्निद्रावशं गतस्याहं रक्तमास्वादयामि । पुनस्त्वमग्निमुखश्चपलश्च । तद्यदि मया सह रक्तपानं करोषि तत्तिष्ठ । अभीष्टतररक्तमास्वादय । सोऽब्रवीत् । भगवति एवं करिष्यामि । यावत्त्वं नास्वादयसि प्रथमं नृपरक्तं तावन्मम देवगुरुकृतः शपथः स्याद्यदि तदास्वादयामि । एवं तयोः परस्परं वदतोः स राजा तच्छयनमासाद्य प्रसुप्तः । अथासौ मत्कुणो जिह्वालौल्योत्कृष्टौत्सुक्यात् जाग्रतमपि तं महीपतिमदशत् । अथवा साध्विदमुच्यते ।

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा ।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥ ६ ॥

यदि स्याच्छीतलो वह्निः शीतांशुर्दहनात्मकः ।
न स्वभावोऽत्र मर्त्यानां शक्यते कर्तुमन्यथा ॥ ७ ॥

अथासौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेवोत्थितः। अहो ज्ञायतामत्र प्रच्छादनपटे मत्कुणो यूका वा नूनं तिष्ठति येनाहं दष्ट इति। अथ ये कञ्चुकिनस्तत्र स्थितास्ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मदृष्ट्या वीक्षांचक्रुः। अत्रान्तरे स मत्कुणश्चापल्यात्खट्वान्तं प्रविष्टः। सा मन्दविसर्पिण्यपि वस्त्रस्यान्तर्गता तैर्दृष्टा व्यापादिता च।

—पञ्चतन्त्रे

## पञ्चमः पाठः।

5 Ramayana is written by the great sage, Valmiki, long before the tenth Century B.C. He is a poet mentioned in the Vedic Literature. The work is well known to every Sanskrit student. It is the first court epic—a Mahakavya.

### अयोध्यावर्णनम्।

कोशलो नाम मुदितः स्फीतो जनपदो महान्।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान्॥ १॥
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम्॥ २॥
आयता दश च द्वे च योजनानि महापुरी।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा॥ ३॥
राजमार्गेण महता सुविभक्तेन शोभिता।
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः॥ ४॥
तां तु राजा दशरथो महाराष्ट्रविवर्धनः।
पुरीमावासयामास दिवि देवपतिर्यथा॥ ५॥

# षष्ठः पाठः ।

6. Mahabharata, an Indian epic, is written by Vyāsa, after Ramayana. Like the date of Ramayana, the date of this epic also is not known. It can not be later than the tenth Century B.C. The contents of this also are well known.

## परीक्षित्परिश्रम्–प्रथमोऽङ्कः ।

परीक्षिन्नाम राजाऽऽसीद् प्रभवन् कौरववंशजः ।
यथा पाण्डुर्महाबाहुर्धनुर्धरवरो युधि ॥ १ ॥
स कदाचिन्मृगं विद्ध्वा बाणेनानतपर्वणा ।
पृष्ठतो धनुरादाय ससार गहने वने ॥ २ ॥
परीक्षितो नरेन्द्रस्य विद्धो नष्टस्तथा मृगः ।
दूरं चापहृतस्तेन मृगेण स महीपतिः ॥ ३ ॥
परिश्रान्तः पिपासार्त आससाद मुनिं वने ।
तमभिद्रुत्य वेगेन स राजा संशितव्रतम् ॥ ४ ॥
अपृच्छद्धनुरुद्यम्य तं मुनिं क्षुच्छ्रमान्वितः ।
भो भो ब्रह्मन्नहं राजा परीक्षिदभिमन्युजः ॥ ५ ॥
मया विद्धो मृगो नष्टः कच्चित्तं दृष्टवानसि ।
स मुनिस्तं तु नोवाच किंचिन्मौनव्रते स्थितः ॥ ६ ॥
तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासजत् ।
न स किंचिदुवाचैनं शुभं वा यदि वाऽशुभम् ॥ ७ ॥
न हि तं राजशार्दूलस्तथा धर्मपरायणम् ।
जानाति भरतश्रेष्ठस्तत एनमधर्षयत् ॥ ८ ॥
तरुणस्तस्य पुत्रोऽभूत्तिग्मतेजा महातपाः ।
शृङ्गी नाम महाक्रोधो दुष्प्रसादो महाव्रतः ॥ ९ ॥

कपाटतोरणवतीं सुविभक्तान्तरापणाम् ।
सर्वयन्त्रायुधवतीमुषितां सर्वशिल्पिभिः ॥ ६ ॥
सूतमागधसम्बाधां श्रीमतीमतुलप्रभाम् ।
उच्चाट्टालध्वजवतीं शतघ्नीशतसङ्कुलाम् ॥ ७ ॥
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ।
दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदाम् ॥ ८ ॥
सामन्तराजसंघैश्च बलिकर्मभिरावृताम् ।
नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ ९ ॥
प्रासादै रत्नविकृतैः पर्वतैरिव शोभिताम् ।
कूटागारैश्च सम्पूर्णामिन्द्रस्येवामरावतीम् ॥ १० ॥
चित्रामष्टापदाकारां वरनारीगणयुताम् ।
सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ ११ ॥
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा ।
नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥ १२ ॥
ये च बाणैर्न विध्यन्ति विविक्तमपरापरम् ।
शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ १३ ॥
सिंहव्याघ्रवराहाणां मत्तानां नदतां वने ।
हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥ १४ ॥
तादृशानां सहस्रैस्तामभिपूर्णां महारथैः ।
पुरीमावासयामास राजा दशरथस्तदा ॥ १५ ॥

तामग्निमद्भिर्गुणवद्भिरावृतां
द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रदैः सत्यरतैर्महात्मभि-
र्महर्षिकल्पैर्ऋषिभिश्च केवलैः ॥ १६ ॥

—रामायणस्य बाल

## षष्ठः पाठः ।

Mahābhārata, an Indian epic, is written by Vyāsa, after Rāmāyana. Like the date of Rāmāyana, the date of this epic also is not known. It can not be later than the tenth Century B.C. The contents of this also are well known.

### परीक्षिच्चरितम्—प्रथमोऽध्यायः ।

परीक्षिन्नाम राजर्षिर् अभवत् पाण्डववंशजः ।
यथा पाण्डुर्महाबाहुर्धनुर्धरवरो युधि ॥ १ ॥
स कदाचिन्मृगं विद्ध्वा बाणेनानतपर्वणा ।
पृष्ठतो धनुरादाय ससार गहने वने ॥ २ ॥
परीक्षितो नरेन्द्रस्य विद्धो यस्तस्य वै मृगः ।
दूरं चापहृतस्तेन मृगेण स महीपतिः ॥ ३ ॥
परिश्रान्तः पिपासार्त आससाद मुनिं वने ।
तमभिद्रुत्य वेगेन स राजा संशितव्रतम् ॥ ४ ॥
अपृच्छद्धनुरुद्यम्य तं मुनिं क्षुच्छ्रमान्वितः ।
भो भो ब्रह्मन्नहं राजा परीक्षिदभिमन्युजः ॥ ५ ॥
मया विद्धो मृगो नष्टः कच्चित्तं दृष्टवानसि ।
स मुनिस्तं तु नोवाच किंचिन्मौनव्रते स्थितः ॥ ६ ॥
तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासजत् ।
न स किंचिदुवाचैनं शुभं वा यदि वाऽशुभम् ॥ ७ ॥
न हि तं राजशार्दूलस्तथा धर्मपरायणम् ।
जानाति भरतश्रेष्ठस्तत एनमधर्षयत् ॥ ८ ॥
तरुणस्तस्य पुत्रोऽभूत्तिग्मतेजा महातपाः ।
शृङ्गी नाम महाक्रोधो दुष्प्रसादो महाव्रतः ॥ ९ ॥

कपाटतोरणवतीं सुविभक्तान्तरापणाम् ।
सर्वयन्त्रायुधवतीमुषितां सर्वशिल्पिभिः ॥ ६ ॥
सूतमागधसम्बाधां श्रीमतीमतुलप्रभाम् ।
उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् ॥ ७ ॥
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ।
दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदाम् ॥ ८ ॥
सामन्तराजसंघैश्च बलिकर्मभिरावृताम् ।
नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ ९ ॥
प्रासादै रत्नविकृतैः पर्वतैरिव शोभिताम् ।
कूटागारैश्च सम्पूर्णामिन्द्रस्येवामरावतीम् ॥ १० ॥
चित्रामष्टपदाकारां वरनारीगणायुताम् ।
सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ ११ ॥
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा ।
नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥ १२ ॥
ये च बाणैर्न विध्यन्ति विविक्तमपरापरम् ।
शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ १३ ॥
सिंहव्याघ्रवराहाणां मत्तानां नदतां वने ।
हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥ १४ ॥
तादृशानां सहस्रैस्तामभिपूर्णां महारथैः ।
पुरीमावासयामास राजा दशरथस्तदा ॥ १५ ॥

तामग्निमद्भिर्गुणवद्भिरावृतां
द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रदैः सत्यरतैर्महात्मभि-
र्महर्षिकल्पैर्ऋषिभिश्च केवलैः ॥ १६ ॥

—रामायणस्य बालकाण्डे

---

## षष्ठः पाठः ।

6 Mahābhārata, an Indian epic, is written by Vyāsa after Rāmāyaṇa. Like the date of Rāmāyaṇa, the date of this epic also is not known. It can not be later than the tenth Century B.C. The contents of this also are well known.

### परीक्षिच्चरित्रम्–प्रथमोऽङ्कः ।

परीक्षिन्नाम राजासीद् महान् कौरववंशजः ।
यथा पाण्डुर्महाबाहुर्धनुर्धरवरो युधि ॥ १ ॥
स कदाचिन्मृगं विद्ध्वा बाणेनानतपर्वणा ।
पृष्ठतो धनुरादाय ससार गहने वने ॥ २ ॥
परीक्षितो नरेन्द्रस्य विद्धो यथण्यान्मृगः ।
दूरं चापहृतस्तेन मृगेण स महीपतिः ॥ ३ ॥
परिश्रान्तः पिपासार्त आससाद मुनिं वने ।
समभिद्रुत्य वेगेन स राजा संशितव्रतम् ॥ ४ ॥
अपृच्छद्धनुरुद्यम्य तं मुनिं क्षुच्छ्रमान्वितः ।
भो भो ब्रह्मन्नहं राजा परीक्षिदभिमन्युजः ॥ ५ ॥
मया विद्धो मृगो नष्टः कच्चित्त्वं दृष्टवानसि ।
स मुनिस्तं तु नोवाच किंचिन्मौनव्रते स्थितः ॥ ६ ॥
तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासजत् ।
न स किंचिदुवाचैनं शुभं वा यदि वाऽशुभम् ॥ ७ ॥
न हि तं राजशार्दूलस्तथा धर्मपरायणम् ।
जानाति भरतश्रेष्ठस्तत एनमधर्षयत् ॥ ८ ॥
तरुणस्तस्य पुत्रोऽभूत्तिग्मतेजा महातपाः ।
शृङ्गी नाम महाक्रोधो दुष्प्रसादो महाव्रतः ॥ ९ ॥

आविष्टः स हि कोपेन शशाप नृपतिं तदा ।
याऽुपस्पृश्य तेजस्वी क्रोधवेगबलात्कृतः ॥ १० ॥
योऽसौ वृद्धस्य तातस्य तथा कृच्छ्रगतस्य ह ।
स्कन्धे मृतं समास्राक्षीत्पन्नगं राजकिल्बिषी ॥ ११ ॥
तं पापमतिसंक्रुद्धस्तक्षकः पन्नगेश्वरः ।
सप्तरात्रादितो नेता यमस्य सदनं प्रति ॥ १२ ॥
तमब्रवीत्पिता ब्रह्मंस्तथा कोपसमन्वितम् ।
न मे प्रियं कृतं तात नैष धर्मस्तपस्विनाम् ॥ १३ ॥
वयं तस्य नरेन्द्रस्य विषये निवसामहे ।
तेनेह क्षुधितेनाद्य श्रान्तेन च तपस्विना ॥ १४ ॥
अजानता कृतं मन्ये व्रतमेतदिदं मम ।
न ह्यर्हति नृपः शापमस्मत्तः पुत्र सर्वथा ॥ १५ ॥
जानाम्युग्रप्रभावं त्वां तात सत्यगिरं तथा ।
नानृतं चोक्तपूर्वं ते नैतन्मिथ्या भविष्यति ॥ १६ ॥
क्रोधो हि धर्मं हरति यतीनां दुःखसंचितम् ।
ततो धर्मविहीनानां गतिरिष्टा न विद्यते ॥ १७ ॥
शम एव यतीनां तु क्षमिणां सिद्धिकारकः ।
क्षमावतामयं लोकः परश्चैव क्षमावताम् ॥ १८ ॥
तस्माच्चरेथाः सततं क्षमाशीलो जितेन्द्रियः ।
क्षमया प्राप्स्यसे लोकान् ब्रह्मणः समनन्तरान् ॥ १९ ॥
मया तु शममास्थाय यच्छक्यं कर्तुमद्य वै ।
तत्करिष्याम्यहं तात प्रेषयिष्ये नृपाय वै ॥ २० ॥

तमस्तं प्रेषयामास राजा गौरमुखं तदा ।
भूयः प्रसादं भगवान्करोत्विह ममेति वै ॥ ११ ॥
तस्मिंश्च गतमात्रेऽथ राजा गौरमुखे तदा ।
मन्त्रिभिर्मन्त्रयामास सह संविग्नमानसः ॥ १२ ॥
संमन्त्र्य मन्त्रिभिश्चैव स तथा मन्त्रतत्त्ववित् ।
प्रासादं कारयामास एकस्तम्भं सुरक्षितम् ॥ १३ ॥
रक्षां च विदधे तत्र भिषजश्चौषधानि च ।
ब्राह्मणान्मन्त्रसिद्धांश्च सर्वतो वै न्ययोजयत् ॥ १४ ॥
राजकार्याणि तत्रस्थः सर्वाण्येवाकरोच्च सः ।
मन्त्रिभिः सह धर्मज्ञः समन्तात्परिरक्षितः ॥ १५ ॥
न चैनं कश्चिदारूढं लभते राजसत्तमम् ।
वातोऽपि निश्चरंस्तत्र प्रवेशे विनिवार्यते ॥ १६ ॥
प्राप्ते च दिवसे तस्मिन् सप्तमे द्विजसत्तमः ।
काश्यपोऽभ्यागमद्विद्वांस्तं राजानं चिकित्सितुम् ॥१७॥
तं दष्टं पन्नगेन्द्रेण करिष्येऽहमपज्वरम् ।
तत्र मेऽर्थश्च धर्मश्च भवितेति विचिन्तयन् ॥ १८ ॥
तं ददर्श स नागेन्द्रस्तक्षकः काश्यपं पथि ।
गच्छन्तमेकमनसं द्विजो भूत्वा वयोऽतिगः ॥ १९ ॥
तमब्रवीत्पन्नगेन्द्रः काश्यपं मुनिपुङ्गवम् ।
क्व भवांस्त्वरितो याति किं च कार्यं चिकीर्षति ॥ २० ॥

काश्यप उवाच—

नृपं कुरुकुलोत्पन्नं परीक्षितमरिन्दमम् ।
तक्षकः पन्नगश्रेष्ठस्तेजसाऽद्य प्रधक्ष्यति ॥ २१ ॥
तं दष्टं पन्नगेन्द्रेण तेनाग्निसमतेजसम् ।
गच्छामि त्वरितं सौम्य सद्यः कर्तुमपज्वरम् ॥ २२ ॥

तक्षक उवाच—

अहं स तक्षको ब्रह्मंस्तं धक्ष्यामि महीपतिम् ।
निवर्तस्व न शक्तस्त्वं मया दष्टं चिकित्सितुम् ॥ २१ ॥

---

## अष्टमः पाठः ।

### परीक्षिदुपाख्यानम्—तृतीयोऽंशः ।

त० उ०—

यदि दष्टं मयेह त्वं शक्तः किंचिच्चिकित्सितुम् ।
ततो वृक्षं मया दष्टमिमं जीवय काश्यप ॥ १ ॥
परं मन्त्रबलं यत्ते तद्दर्शय यतस्व च ।
न्यग्रोधमेनं धक्ष्यामि पश्यतस्ते द्विजोत्तम ॥ २ ॥

का० उ०—

दश नागेन्द्र वृक्षं त्वं यद्येतदभिमन्यसे ।
अहमेनं त्वया दष्टं जीवयिष्ये भुजङ्गम ॥ ३ ॥
एवमुक्तः स नागेन्द्रः काश्यपेन महात्मना ।
अदशद्वृक्षमभ्येत्य न्यग्रोधं पन्नगोत्तमः ॥ ४ ॥
स वृक्षस्तेन दष्टस्तु पन्नगेन महात्मना ।
आशीविषविषोपेतः प्रजज्वाल समन्ततः ॥ ५ ॥
तं दग्ध्वा स नगं नागः काश्यपं पुनरब्रवीत् ।
कुरु यत्नं द्विजश्रेष्ठ जीवयैनं वनस्पतिम् ॥ ६ ॥
ततः स भगवान्विद्वान्काश्यपो द्विजसत्तमः ।
भस्मराशीकृतं वृक्षं विद्यया समजीवयत् ॥ ७ ॥
तं दृष्ट्वा जीवितं वृक्षं काश्यपेन महात्मना ।
उवाच तक्षको ब्रह्मन्नेतदत्यद्भुतं त्वयि ॥ ८ ॥

द्विजेन्द्र यदिदं हन्या मम वा मन्त्रिणस्य वा ।
यत्नेऽभिलषितं प्राप्तुं फलं तस्मान्नृपोत्तमात् ॥ ९ ॥
अहमेव प्रदास्यामि तत्ते यद्यपि दुर्लभम् ।
विप्रशापाभिभूते च क्षीणायुषि नराधिपे ॥ १० ॥
घटमानस्य ते विप्र सिद्धिः संशयिता भवेत् ।

का० ५०—

धनार्थी यास्यहं तत्र तस्मै देहि भुजङ्गम ॥ ११ ॥
लब्ध्वा वित्तं मुनिवरस्तक्षकाद्यावदीप्सितम् ।
निवृत्ते काश्यपे तस्मिन् समयेन महात्मनि ॥ १२ ॥
जगाम तक्षकस्तूर्णं नगरं नागसाह्वयम् ।
अथ शुश्राव गच्छन्स तक्षको जगतीपतिम् ॥१३॥
मन्त्रैर्गदैर्विषहरै रक्ष्यमाणं प्रयत्नतः ।
ततस्तापसरूपेण प्राहिणोत्स भुजङ्गमान् ॥ १४ ॥
फलदर्भोदकं गृह्य राज्ञे नागोऽथ तक्षकः ।
गच्छध्वं यूयमव्यग्रा राजानं कार्यवत्तया ॥ १५ ॥
फलपुष्पोदकं नाम प्रतिग्राहयितुं नृपम् ।
ते तक्षकसमादिष्टास्तथा चक्रुर्भुजङ्गमाः ॥ १६ ॥
उपनिन्युस्तथा राज्ञे दर्भानापःफलानि च ।
तच्च सर्वं स राजेन्द्रः प्रतिजग्राह वीर्यवान् ॥ १७ ॥
गतेषु तेषु नागेषु तापसच्छद्मरूपिषु ।
अमात्यान्सुहृदश्चैव प्रोवाच स नराधिपः ॥ १८ ॥
भक्षयन्तु भवन्तो वै स्वादूनीमानि सर्वशः ।
तापसैरुपनीतानि फलानि सहिता मया ॥ १९ ॥
यस्मिन्नेव फले नागस्तमेवाभक्षयत्स्वयम् ।
ततो भक्षयतस्तस्य फलात्कृमिरभूदणुः ॥ २० ॥
ह्रस्वकः कृष्णनयनस्ताम्रवर्णोऽथ शौनक ।

## नवमः पाठः ।

### यौवराज्यमन्त्रणम् ।

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः ।
[illegible] १ ॥
[illegible]
स्वरेण महता राजा जीमूत इव नादयन् ॥ २ ॥
राजलक्षणयुक्तेन कान्तेनानुपमेन च ।
उवाच रसयुक्तेन स्वरेण नृपतिर्नृपान् ॥ ३ ॥
विदितं भवतामेतद्यथा मे राज्यमुत्तमम् ।
पूर्वकैर्मम राजेन्द्रैः सुतवत्परिपालितम् ॥ ४ ॥
सोऽहमिक्ष्वाकुभिः सर्वैर्नरेन्द्रैः प्रतिपालितम् ।
श्रेयसा योक्तुमिच्छामि सुखार्हमखिलं जगत् ॥ ५ ॥
मयाप्याचरितं पूर्वैः पन्थानमनुगच्छता ।
प्रजा नित्यमनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ६ ॥
इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम् ।
पाण्डुरस्यातपत्रस्य छायायां जरितं मया ॥ ७ ॥
प्राप्य वर्षसहस्राणि बहून्यायूंषि जीवतः ।
जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ॥ ८ ॥
राजप्रभावजुष्टां च दुर्वहामजितेन्द्रियैः ।
परिश्रान्तोऽस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ॥ ९ ॥
सोऽहं विश्राममिच्छामि पुत्रं कृत्वा प्रजाहिते ।
संनिकृष्टानिमान्सर्वाननुमान्य द्विजर्षभान् ॥ १० ॥
अनुजातो हि मां सर्वैर्गुणैः श्रेष्ठो ममात्मजः ।
पुरन्दरसमो वीर्ये रामः परपुरञ्जयः ॥ ११ ॥

तं चन्द्रमिव पुष्येण युक्तं धर्मभृतां वरम् ।
यौवराज्ये नियोक्तास्मि प्रीतः पुरुषपुङ्गवम् ॥ १२ ॥
अनुरूपः स वो नाथो लक्ष्मीवाँल्लक्ष्मणाग्रजः ।
त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम् ॥ १३ ॥
यदिदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम् ।
भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ॥ १४ ॥
इति ब्रुवन्तं मुदिताः प्रत्यनन्दन्नृपा नृपम् ।
वृष्टिमन्तं महामेघं नर्दन्त इव बर्हिणः ॥ १५ ॥
तस्य धर्मार्थविदुषो भावमाज्ञाय सर्वशः ।
ब्राह्मणा बलमुख्याश्च पौरजानपदैः सह ॥ १६ ॥
समेत्य ते मन्त्रयितुं समतागतबुद्धयः ।
ऊचुश्च मनसा ज्ञात्वा वृद्धं दशरथं नृपम् ॥ १७ ॥
अनेकवर्षसाहस्रो वृद्धस्त्वमसि पार्थिव ।
स रामं युवराजानमभिषिञ्चस्व पार्थिवम् ॥ १८ ॥
इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
गजेन महता यान्तं रामं छत्रावृताननम् ॥ १९ ॥
रामः सत्पुरुषो लोके सत्यः सत्यपरायणः ।
साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह ॥ २० ॥
पौरान् स्वजनवन्नित्यं कुशलं परिपृच्छति ।
पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च ॥ २१ ॥
रामो लोकाभिरामोऽयं शौर्यवीर्यपराक्रमैः ।
प्रजापालनसंयुक्तो न रागोपहतेन्द्रियः ॥ २२ ॥

—रामायणस्यायोध्याकाण्डे

## दशमः पाठः ।

10. Das'akumáracharita—a romance describing ✓. vividly the adventures of Ten Princes—was written | Dandin in the latter half of the fifth Century A.D. the the date is still open to disptue. It is in prose and remarkable for the charming arrangement of jingling te- and wit and humour. The ten princes are राजवाहन, सोमद॰ पुष्पोद्भव, अपहारवर्मन्, उपहारवर्मन्, अर्थपाल, प्रमति, मित्रगुप्त; मन्त्रगु॰ and विश्रुत. Mark the rhythm and alliteration in the passage

### पुष्पोद्भवजन्मकथा ।

कदाचिद्वामदेवशिष्यः सोमदेवशर्मा नाम कंचिदेकं बालकं राज्ञः पुरो निक्षिप्याभाषत । देव रामतीर्थे स्नात्वा प्रत्यागच्छता मया काननावनौ वनितया कयापि धार्यमाणमेनमुज्ज्वलाकारं कुमारं विलोक्य सादरमभाणि । स्थविरे, का त्वम् ? एतस्मिन्नटवीमध्ये बालकमुद्वहन्ती किमर्थमायासेन भ्रमसि, इति । वृद्धयाऽप्यभाणि । मुनिवर, कालयवननाम्नि द्वीपे कालगुप्तो नाम धनाढ्यो वैश्यवरः कश्चिदस्ति । तन्नन्दिनीं नयनानन्दकारिणीं सुवृत्तां नामैतस्माद् द्वीपादागतो मगधनाथमन्त्रिसम्भवो रत्नोद्भवो नाम रमणीयगुणालयो भ्रान्तभूवलयो मनोहारी व्यवहार्युपयम्य सुवस्तुसम्पदा श्वशुरेण सम्मानितोऽभूत् । कालक्रमेण नताङ्गी गर्भिणी जाता । ततः सोदरविलोकनकुतूहलेन रत्नोद्भवः कथं-

सिन्धुपुरमनुनीय चपललोचनया सह प्रवहणमारुह्य पुष्पपुरमभिप्रतस्थे। कल्लोलमालिकाभिहतः पोतः समुद्राम्भस्यमज्जत्। गर्भभरालसां तां ललनां धात्रीभावेन कल्पिताहं फलकमेकमधिरुह्य दैवगत्या तीरभूमिमगमम्। सुहृज्जनपरिवृतो रत्नोद्भवस्तत्र निमग्नो वा केनोपायेन तीरमगमद्वा न जानामि। क्लेशस्य परां काष्ठामधिगता सुवृत्ताऽस्मिन्नटवीमध्येऽद्य सुतमसूत। प्रसववेदनया विचेतना सा प्रच्छायशीतले तरुतले निवसति। विजने वने स्थातुमशक्यतया जनपदगामिनं मार्गमन्वेष्टुमुद्युक्तया मया विवशायास्तस्याः समीपे बालकं निक्षिप्य गन्तुमनुचितमिति कुमारोऽप्यानायि, इति। तस्मिन्नेव क्षणे वन्यो वारणः कश्चिददृश्यत। तं विलोक्य भीता सा बालकं निपात्य प्राद्रवत्। अहं समीपलतागुल्मके प्रविश्य परीक्षमाणोऽतिष्ठम्। निपतितं बालकं पल्लवकवलमिवाददति गजपतौ कण्ठीरवो भीमरवो महाग्रहेण न्यपतत्। भयाकुलेन दन्तावलेन झटिति वियति समुत्पात्यमानो बालको न्यपतत्। चिरायुष्मत्तयाऽसौ न्यग्रोधतरुशाखासमासीनेन वानरेण केनचित्पक्वफललुब्ध्या परिगृह्य फलेतरतया विततस्कन्धमूले निक्षिप्तोऽभूत्। सोऽपि मर्कटः क्वचिदगात्। बालकेन सत्त्वसम्पन्नतया सकलक्लेशसहनेनाभावि। केसरिणा करिणं निहत्य कुत्रचिदगामि। लतागृहान्निर्गतोऽहमपि तेजःपुञ्जं बालकं शनैरवनीरुहादवतार्य वनान्तरे वनितामन्विष्यावलोक्यैनमानीय गुरवे निवेद्य तन्निदेशेन भवन्निकटमानीतवानस्मि, इति।

मधुढोऽस्मि । प्रथमः प्राह—वत्स, यदि त्वं प्रणतोऽसि ततो दीर्घायुर्भव । वद पुनः आगम्यते, किं ते नाम, अत्र च किं कार्यम् । द्वितीयः प्राह—विप्र, भास्कर इति मे नाम । पश्चिमसमुद्रतीरे प्रभासतीर्थसमीपे वसतिर्मम । तत्र भोजस्य वितरणं बहुभिर्व्यावर्णितम् । ततो याचितुमहमागतः । त्वं मम वृद्धत्वात्पितृकल्पोऽसि । त्वमपि स्वपरिचयं वद । स आह—वत्स, शाकल्य इति मे नाम । मयैव शिलानगर्यामागम्यते भोजं प्रति द्रविणाशया । वत्स, त्वयानुक्तमपि दुःखं त्वयि ज्ञायते । कीदृशं तद्वद । ततो भास्करः प्राह—तात, किं ब्रवीमि दुःखम् ।

> क्षुत्क्षामाः शिशवः शवा इव भृशं मन्दाशया बान्धवा
> लिप्ता जर्जरघर्घरी जतुलवैर्नो मां तथा बाधते ।
> गेहिन्या त्रुटितांशुकं घटयितुं कृत्वा सकाकुस्मितं
> कुप्यन्ती प्रतिवेश्म लोकगृहिणी सूचिं यथा याचिता ॥१॥

राजा श्रुत्वा सर्वाभरणान्युत्तार्य तस्मै दत्त्वा प्राह—भास्कर, सीदन्त्यतीव ते बालाः । झटिति देशं याहि । ततः शाकल्यः प्राह—

> अभ्युद्धृता वसुमती दलितोऽरिवर्गः
> क्रोडीकृता बलवता बलिराजलक्ष्मीः ।
> एकत्र जन्मनि कृतं यदनेन यूना
> जन्मत्रये तदकरोत्पुरुषः पुराणः ॥ २ ॥

ततो राजा शाकल्याय लक्षत्रयं दत्तवान् ।

—भोजप्रबन्धे

सर्वेषां सुहृदामेकदैवानुकूलदैवाभावेन महदाश्चर्यं विभ्राणो राज रत्नोद्भवः कथमभवदिति चिन्तयंस्तन्नन्दनं पुष्पोद्भवनामधेय विधाय तदुदन्तं व्याख्याय सुश्रुताय विषादसन्तोषावनुभवंस्त दनुजतनयं समर्पितवान् ।

—दशकुमारचरिते

---

## एकादशः पाठः ।

11. Bhojaprabandha is written by Ballāla after the eleventh century and it describes the life of the King Bhoja of Dhar in Central India. It brings together a number of poets, living in different times and coming to the King's Court. It has no historical value. The language is easy and simple.

### दानवीरो भोजदेवः ।

एकदा राजा धारानगरे विचरन् क्वचिच्छिवालये प्रसुप्तं पुरुषद्वयमपश्यत् । तयोरेको विगतनिद्रो वक्ति । अहो ! ममा-न्तरामत्र एव कस्त्वं प्रसुप्तोऽसि जागर्षि नो वा । ततस्त्वपर आह—विप्र, प्रणतोऽस्मि । अहमपि ब्राह्मणपुत्रस्त्वामत्र प्रथम-रात्रौ शयानं वीक्ष्य प्रदीप्ते च प्रदीपे कमण्डलूपवीतादिभिर्ब्राह्मणं ज्ञात्वा भवदान्तरामत्र एवाहं प्रसुप्तः । इदानीं त्वद्गिरमाकर्ण्य

मधुडोऽस्मि । प्रथमः प्राह—वत्स, यदि त्वं प्रगुणोऽसि ततो दीर्घायुर्भव । वद कुत आगम्यते, किं ते नाम, अत्र च किं कार्यम् । द्वितीयः प्राह—विप्र, भास्कर इति मे नाम । पश्चिमसमुद्रतीरे प्रभासतीर्थसमीपे वसतिर्मम । तत्र भोजस्य वितरणं बहुभिर्व्यावर्णितम् । ततो याचितुमहमागतः । त्वं मम पूज्यत्वात्पितृकल्पोऽसि । त्वमपि स्वपरिचयं वद । स आह—वत्स, शाकल्य इति मे नाम । मयैव शिलानगर्या आगम्यते भोजं प्रति द्रविणाशया । वत्स, त्वयानुभूतमपि दुःखं त्वयि ज्ञायते । कीदृशं तद्वद । ततो भास्करः प्राह—तात, किं ब्रवीमि दुःखम् ।

क्षुत्क्षामाः शिशवः शवा इव भृशं मन्दाशया बान्धवा
लिप्ता जर्जरघर्घरी जतुलवैर्नो मां तथा बाधते ।
गेहिन्या त्रुटितांशुकं घटयितुं कृत्वा सकाकुस्मितं
कुप्यन्ती प्रतिवेश्मलोकगृहिणी सूचिं यदा याचिता ॥१॥

राजा श्रुत्वा सर्वाभरणान्युत्तार्य तस्मै दत्त्वा प्राह—भास्कर, सीदन्त्यतीव ते बालाः । झटिति देशं याहि । ततः शाकल्यः प्राह—

अभ्युद्धृता वसुमती दलितोऽरिवर्गः
क्रोडीकृता बलवता बलिराजलक्ष्मीः ।
एकत्र जन्मनि कृतं यदनेन यूना
जन्मत्रये तदकरोत्पुरुषः पुराणः ॥ २ ॥

ततो राजा शाकल्याय लक्षत्रयं दत्तवान् ।

—भोजप्रबन्धे

# द्वादशः पाठः ।

12. Mrichchhakatika—the clay-cart—is a drama wri
by S'ūdraka in the fifth Century A.D. Its first four
are almost the same as those in the Chārudatta of Bhāsa
contains ten acts and so belongs to the Prakarana class of
drama. It describes the society of the time and is extrem
humourous.

## दारिद्र्यम् ।

चारुदत्तः—

( ऊर्ध्वमवलोक्य सनिर्वेदं निःश्वस्य )

यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव संप्रति विरूढतृणाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥ १ ॥

( इति मन्दं मन्दं परिक्रम्योपविशति । )

विदूषकः—

एष आर्यचारुदत्तः । तद्यावत्साम्प्रतमुपसर्पामि । ( उपसृ
स्वस्ति भवते । वर्धतां भवान् ।

चारुदत्तः—

अये सर्वकालमित्रं मैत्रेयः प्राप्तः । सखे, स्वागतम्
आस्यताम् ।

विदूषकः—

यद्भवानाज्ञापयति । ( उपविश्य ) भो वयस्य, एष ते प्रियवयस्येन जूर्णवृद्धेन जातीकुसुमवासितः प्रावारकोऽनुप्रेषितः सिद्धीकृतदेवकार्यस्यार्यचारुदत्तस्य त्वयोपनेतव्य इति । (समर्पयति)

( चारुदत्तो गृहीत्वा सचिन्तः स्थितः । )

विदूषकः—भोः, किमिदं चिन्त्यते ।

चारुदत्तः—वयस्य,

सुखं हि दुःखान्यनुभूय शोभते
घनान्धकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति नरो दरिद्रतां
धृतः शरीरेण मृतः स जीवति ॥ २ ॥

विदूषकः—भो वयस्य, मरणाद्दारिद्र्याद्वा कतरत्ते रोचते ।

चारुदत्तः—वयस्य,

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ ३ ॥

विदूषकः—

भो वयस्य, अलं संतापेन । प्रणयिजनसंक्रामितविभवस्य सुरजनपीतशेषस्य प्रतिपच्चन्द्रस्येव परिक्षयोऽपि तेऽधिकतरं रमणीयः ।

चारुदत्तः—वयस्य, न ममार्थान्प्रति दैन्यम् । पश्य ।

एतत्तु मां दहति यद्गृहमस्मदीयं
क्षीणार्थमित्यतिथयः परिवर्जयन्ति ।
संशुष्कसान्द्रमदलेखमिव भ्रमन्तः
कालात्यये मधुकराः करिणः कपोलम् ॥ ४ ॥

विदूषकः—

भो वयस्य, एते खलु दास्याः पुत्रा अर्थकल्यवर्ता वरटाभीता इव गोपालदारका अरण्ये यत्र यत्र न खाद्यन्ते तत्र तत्र गच्छन्ति ।

चारुदत्तः—वयस्य,

सत्यं न मे विभवनाशकृताऽस्ति चिन्ता
भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।
एतत्तु मां दहति नष्टधनाश्रयस्य
यत्सौहृदादपि जनाः शिथिलीभवन्ति ॥ ५ ॥

अपि च,

दारिद्र्याद् ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ ६ ॥

विदूषकः—भो वयस्य, तमेवार्थकल्यवर्तं स्मृत्वाऽलं सन्तापितेन ।

चारुदत्तः—वयस्य, दारिद्र्यं हि पुरुषस्य ।

निवासश्चिन्तायाः परपरिभवो वैरमपरं
जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् ।
वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो
हृदिस्थः शोकाग्निर्न च दहति सन्तापयति च ॥ ७ ॥

तद्वयस्य, कृतो मया गृहदेवताभ्यो बलिः। गच्छ। त्वमपि चतुष्पथे मातृभ्यो बलिमुपहर।

विदूषकः—न गमिष्यामि।

चारुदत्तः—किमर्थम्।

विदूषकः—

यत एवं पूज्यमाना अपि देवता न ते प्रसीदन्ति। तत्को गुणो देवेष्वर्चितेषु।

चारुदत्तः—वयस्य, मा मैवम्। गृहस्थस्य नित्योऽयं विधिः।

तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः॥ ८॥

तद् गच्छ। मातृभ्यो बलिमुपहर।

विदूषकः—

भो न गमिष्यामि। अन्यः कोऽपि प्रयुज्यताम्। मम पुनर्ब्राह्मणस्य सर्वमेव विपरीतं परिणमति। आदर्शगतेव छाया वामतो दक्षिणा दक्षिणतो वामा। अन्यच्चैतस्यां प्रदोषवेलायामिह राजमार्गे गणिका विटाश्चेटा राजवल्लभाश्च पुरुषाः सञ्चरन्ति। तस्मान्मण्डूकलुब्धस्य कालसर्पस्य मूषिक इवाभिमुखापतितो वध्य इदानीं भविष्यामि। त्वमिहोपविष्टः किं करिष्यामि।

चारुदत्तः—भवतु। तिष्ठ तावत्। अहं समाधिं निर्वर्तयामि।

—मृच्छकटिके

## त्रयोदशः पाठः ।

### स्वभावो दुरतिक्रमः ।

अस्ति शृगालः कश्चित्स्वेच्छया नगरोपान्ते भ्रमन्नीलसन्धानभाण्डे निपतितः पश्चादुत्थातुमसमर्थः प्रातरात्मानं मृतवत्सन्दर्श्य स्थितः । अथ नीलीभाण्डस्वामिना मृत इति ज्ञात्वा तस्मादमौ समुत्थाप्य दूरे नीत्वा परित्यक्तः । ततोऽसौ वनं गत्वाऽऽत्मानं नीलवर्णमवलोक्याचिन्तयत् । अहमिदानीमुत्तमवर्णस्तदात्मनः किमुत्कर्षं न साधयामि । इत्युक्त्वा शृगालानाहूय तेनोक्तम् । अहं भगवत्या वनदेवतया स्वहस्तेनारण्यराज्ये सर्वौषधिरसेनाभिषिक्तः तदद्यारभ्यारण्येऽस्मदाज्ञया व्यवहारः कार्यः । शृगालाश्च तं विशिष्टवर्णमवलोक्य साष्टाङ्गपातं प्रणम्योचुः । यथाऽऽज्ञापयति देवः । इत्यनेनैवक्रमेण सर्वेष्वरण्यवासिष्वाधिपत्यं तस्य बभूव । ततस्तेन स्वज्ञातिभिरावृतेनाधिक्यं साधितम् । ततस्तेन सिंहव्याघ्रादीनुत्तमपरिजनान् प्राप्य सदसि शृगालानवलोक्य लज्जमानेनावज्ञाय स्वज्ञातयः सर्वे दूरीकृताः । ततो विषण्णाञ्छृगालानवलोक्य केनचिद् वृद्धशृगालेन प्रतिज्ञातम् । मा विषीदत । यदनेनानभिज्ञेन नीतिविदो मर्मज्ञा वयं स्वसमीपात्परिभूतास्तद्यथाऽयं नश्यति तथा विधेयम् । यतोऽमी व्याघ्रादयो वर्णमात्रविप्रलब्धाः शृगालमज्ञात्वा राजानममुं मन्यन्ते । तद्यथायं परिचीयते तथा कुरुत । तत्र चैवमनुष्ठेयं यथा वदामि । सर्वे

सन्ध्यासमये तत्सन्निधाने महारावमेकदैव करिष्यथ । ततस्तं शब्दमाकर्ण्य जातिस्वभावात्तेनापि शब्दः कर्तव्यः । ततस्तथाऽनुष्ठिते सति तद्वृत्तम् । यतः—

> यः स्वभावो हि यस्यास्ति स नित्यं दुरतिक्रमः ।
> श्वा यदि क्रियते राजा तत्किं नाश्नात्युपानहम् ॥ १ ॥

ततः शब्दादभिज्ञाय स व्याघ्रेण हतः । तथा चोक्तम्—

> छिद्रं मर्म च वीर्यं च सर्वं वेत्ति निजो रिपुः ।
> दहत्यन्तर्गतश्चैव शुष्कं वृक्षमिवानलः ॥ २ ॥

अतोऽहं ब्रवीमि—

> आत्मपक्षं परित्यज्य परपक्षेषु यो रतः ।
> स परैर्हन्यते मूढो नीलवर्णशृगालवत् ॥ ३ ॥

—हितोपदेशे

---

# चतुर्दशः पाठः ।

14. Mudrā-Rākshasa—the minister Rākshasa and the Seal—is a drama of seven acts, written by Vishākhadatta in the latter part of the eighth Century A.D. It describes the plot of the Brāhmana politician Chānakya—The King-maker-to win over the noble Rākshasa, the minister of the Nandas who were all destroyed by the tricks of Chānakya. It is a unique play, having only one unimportant female character and still full of life and action and most interesting. The language is difficult.

## कौटिल्यः ।

( ततः प्रविशति मुक्तां शिखां परामृशन्कुपितश्चाणक्यः ).

चाणक्यः—कथय क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति । नन्दकुलकालभुजगीं मे शिखां को बध्योऽपि बध्यमानां नेच्छति । शार्ङ्गरव शार्ङ्गरव ।

( प्रविश्य ) शिष्यः—उपाध्याय आज्ञापय ।

चाणक्यः—वत्स, उपवेष्टुमिच्छामि ।

शिष्यः—उपाध्याय, नन्वियं संनिहितवेत्रासनैव द्वारप्रकोष्ठशाला । तदस्यामुपवेष्टुमर्हत्युपाध्यायः ।

चाणक्यः—वत्स, कार्याभिनियोग एवास्मान्व्याकुलयति, न पुनरुपाध्यायसहभूः शिष्यजने दुःशीलता । ( नाट्येनोपविश्यात्मगतम् ) कथं प्रकाशतां गतोऽयमर्थः पौरेषु यथा किल

नन्दकुलविनाशजनितरोषो राक्षसः पितृवधामर्षितेन सकलनन्द-
राज्यपरिपणनप्रोत्साहितेन पर्वतकपुत्रेण मलयकेतुना सह सन्धाय
तदुपगृहीतेन च महता म्लेच्छराजबलेन परिवृतो वृषलमभियो-
क्तुमुद्यत इति । (विचिन्त्य) अथवा येन मया सर्वलोकप्रकाशं
नन्दवंशवधं प्रतिज्ञाय निस्तीर्णा दुस्तरा प्रतिज्ञासरित्सोऽहमिदानीं
प्रकाशीभवन्तमप्येनमर्थं न समर्थः किं प्रशमयितुम् । इदानीमव-
सितप्रतिज्ञाभारोऽप्यहं वृषलापेक्षया शस्त्रं धारयामि । येन मया—

समुत्खाता नन्दा नव हृदयरोगा इव भुवः
कृता मौर्ये लक्ष्मीः सरसि नलिनीव स्थिरपदा ।
द्वयोः सारं तुल्यं द्वितयमभियुक्तेन मनसा
फलं कोपप्रीत्योर्द्विषति च विभक्तं सुहृदि च ॥ १ ॥

अथवाऽगृहीते राक्षसे किमुत्खातं नन्दवंशस्य किं वा
स्थैर्यमुत्पादितं चन्द्रगुप्तलक्ष्म्याः । ( विचिन्त्य ) अहो राक्षसस्य
नन्दवंशे निरतिशयो भक्तिगुणः । स खलु कस्मिंश्चिदपि जीवति
नन्दान्वयावयवे वृषलस्य साचिव्यं ग्राहयितुं न शक्यते ।
( प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा ) साधु अमात्यराक्षस साधु ।
साधु श्रोत्रिय साधु । साधु मन्त्रिबृहस्पते साधु । दुर्लभास्त्वादृशाः
वृत्तिनो ये भर्तुः प्रलयेऽपि भक्त्या कार्यधुरं वहन्ति । अत
एवास्माकं त्वत्संग्रहे यत्नः कथमसौ वृषलस्य साचिव्यग्रहणेन
सानुग्रहः स्यादिति ।

तन्मयाऽप्यस्मिन्वस्तुनि न शयानेन स्थीयते । यथाशक्ति
क्रियते तद्ग्रहणं प्रति यत्नः । कथमिव । अत्र तावद्वृषलपर्वत-

कयोरन्यतरविनाशेनापि चाणक्यस्यापकृतं भवतीति विषकन्य
राक्षसेनास्माकमत्यन्तोपकारि मित्रं घातितस्तपस्वी पर्वतक इ
संचारितो जगति जनापवादः । लोकप्रत्ययार्थमस्यैवार्थस्याभि-
व्यक्तये पिता ते चाणक्येन घातित इति रहसि त्रासयित्वा भागु
रायणेनापवाहितः पर्वतकपुत्रो मलयकेतुः । शक्यः खल्वे
राक्षसमतिपरिगृहीतोऽपि व्युत्तिष्ठमानः प्रज्ञया निग्रहीतुम् । न
पुनरस्य निग्रहात्पर्वतकवधोत्पन्नं राक्षसस्यायशः प्रकाशीभवत्प्रमार्ष्टु
मिच्छामि । प्रयुक्ताश्च स्वपक्षपरपक्षयोरनुरक्तापरक्तजनजिज्ञासया
बहुविधदेशवेषभाषाचारवेदिनो नानाव्यञ्जनाः प्रणिधयः । अन्वि-
ष्यते च कुसुमपुरवासिनां नन्दामात्यसुहृदां निपुणं प्रचारगतम् ।
तत्तत्कारणमुत्पाद्य कृतकृत्यतामापादिताश्चन्द्रगुप्तसहोत्थायिनो भद्र-
भटप्रभृतयः प्रधानपुरुषाः । शत्रुप्रयुक्तानां च तीक्ष्णरसदायिनां
प्रतिविधानं प्रत्यप्रमादिनः परीक्षितभक्तयः क्षितिपतिप्रत्यासन्ना
नियोजितास्तत्र तत्राप्तपुरुषाः । अस्ति चास्माकं सहाध्यायि
मित्रमिन्दुशर्मा नाम ब्राह्मणः । स चौशनस्यां दण्डनीत्यां चतुः-
ज्योतिःशास्त्रे च परं प्रावीण्यमुपगतः । स मया क्षपण-
नन्दवंशवधप्रतिज्ञानन्तरमेव कुसुमपुरमानीय सर्व-
सख्यं ग्राहितो विशेषतश्च तस्मिन्राक्षसः समु-
तेनेदानीं महत्प्रयोजनमनुष्ठेयं भविष्यति । तदे-
स्यते । वृषल एव केवलं प्रधानप्रकृति-
। अथ वा यत्स्वय-

अभियोगदुःखैरसाधारणैरुपाकृतं तदेव राज्यं सुखयति ।

कुतः—

स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः ।
गजेन्द्राश्च नरेन्द्राश्च प्रायः सीदन्ति दुःखिताः ॥

—मुद्राराक्षसे

---

## पंचदशः पाठः ।

### शकुंतलोत्पत्तिः—प्रथमोऽशः ।

शकुन्तलोवाच—

यथाऽयमागमो मह्यं यथा चेदमभूत्पुरा ।
शृणु राजन् यथातत्त्वं यथाऽस्मि दुहिता मुनेः ॥ १ ॥
ऋषिः कश्चिदिहागम्य मम जन्माभ्यचोदयत् ।
तस्मै प्रोवाच भगवान्यथा तच्छृणु पार्थिव ॥ २ ॥

कण्व उवाच—

तप्यमानः किल पुरा विश्वामित्रो महत्तपः ।
सुभृशं तापयामास शक्रं सुरगणेश्वरम् ॥ ३ ॥
तपसा दीप्तवीर्योऽयं स्थानान्मां च्यावयेदिति ।
भीतः पुरन्दरस्तस्मान्मेनकामिदमब्रवीत् ॥ ४ ॥
गुणैरप्सरसां दिव्यैर्मेनके त्वं विशिष्यसे ।
श्रेयो मे कुरु कल्याणि यत्त्वां वक्ष्यामि तच्छृणु ॥

भिक्षुः—पुरीं प्रविष्टः ।

तापसः—अथ किं दशरथस्य ।

भिक्षुः—न हि न हि । कन्धरस्य ।

तापसः—केन पुनः प्रतिहारादिप्रमत्तपुरीप्रवेशो मायया ।

भिक्षुः—रामबाणेनैव ।

तापसः—क एष रामः । ( विमृश्य ) नूनं स एष यः स्वसु दशरथकुमारोऽग्रजः । तत्कथय क्व पुनरधुना ताटकाशमनौ ।

भिक्षुः—सुबाहुस्तावत् ताटकामेवानुगतः । मारीचोऽपि शि-रोधिविवरलग्ननाराचपीडितो जीवन्मुक्त इव दूरं क्षिप्तः ।

तापसः—तत्कथमिदानीं न कथितं केनापि लङ्केश्वरस्य ।

भिक्षुः—कथितमेव विलोदमाक्रन्दता मारीचेन ।

तापसः—तत्कथं कुपितो न लङ्केश्वरः ।

भिक्षुः—सीताभिलाषशीतले लङ्केश्वरचेतसि नारूढ एव कोप-परितापः ।

तापसः—क्व पुनरधुना रामलक्ष्मणौ ।

भिक्षुः—श्रुतं मया कौशिकमनुसरन्तौ तदाश्रममागम्य मिथिलां प्रति प्रस्थिताविति । ( विलोक्य, सत्रासम् ) कथमिमौ तावित एवा-भिवर्तेते । तदस्य निशाचरवैरिणो रामस्य पुरतः स्थातुमनुचित-मावयोः ।

( निष्क्रान्तौ )

—प्रसन्नराघवे

तापसः—यदिदमाकर्ण्य सताटङ्कयुगं लंकेश्वरजनन्या निक्षिप्ता एव कर्णोचितमिति विनिश्चित्य तदाहरणाय पूर्वमेव ताटकां प्रति निजानुचर एकः प्रस्थापितः । अधुना च नूनं ताटकया सताटङ्कयुगमाहृतमिति विचार्य तदानयनाय ताटकां प्रत्यहं प्रहितः ।

भिक्षुः—कथं पुनरिदं वृत्तान्तजातमाकर्णितं मान्यवता ।

तापसः—

> वार्ता च कौतुकवती विमला च विद्या
> लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
> तैलस्य बिन्दुरिव वारिणि दुर्निवार-
> मेतत् त्रयं प्रसरति स्वयमेव लोके ॥ २ ॥

विशेषतश्च बहुतरप्रणिधिप्रणिधायी मान्यवान् ।

भिक्षुः—तत् कथं मिथिलोपवने भवान् ।

तापसः—आकर्णितं हि मया मिथिलामागतो लंकेश्वर इति । अतस्तद्विलोकनाय प्रथममिहागतोऽधुना च ताटकावनं यास्यामि। तत् कथय तावद्भवान् पुनः कतरः ।

भिक्षुः—अहमपि स एव यः प्रथमं ताटकां प्रति प्रहितो मिथिलोपवनागमनकारणं समानमावयोः ।

तापसः—( सहर्षं ) तत्कथय तावत्तत्किं सताटङ्कमधुना ताटकावनम् ।

भिक्षुः—सताटकमिति तावत् पृच्छ ।

तापसः—क्व पुनः संप्रति ताटका ।

भिक्षुः—पुरीं प्रविष्टा ।

तापसः—तत् किं दशरथस्य ।

भिक्षुः—न हि न हि । अन्तकस्य ।

तापसः—केन पुनः प्रतिहारायितमन्तकपुरीप्रवेशे तस्याः ।

भिक्षुः—रामबाणेनैव ।

तापसः—क एष रामः । ( विमृश्य ) नूनं स एव यः खलु दशरथकुमारयोरग्रजः । तत्कथय क्व पुनरधुना ताटकाघातनयौ ।

भिक्षुः—सुबाहुस्तावत् ताटकामेवानुगतः । मारीचोऽपि शिशुमौळीविविरामनाराचपीडितो जीवन्मुक्त इव दूरं क्षिप्तः ।

तापसः—तत्कथमिदानीं न कथितं केनापि लङ्केश्वरस्य ।

भिक्षुः—कथितमेव विक्लेदमाक्रन्दता मारीचेन ।

तापसः—तत्कथं कुपितो न लङ्केश्वरः ।

भिक्षुः—सीताभिलाषशीतले लङ्केश्वरचेतसि नारूढ एव कोपपरीतापः ।

तापसः—क्व पुनरधुना रामलक्ष्मणौ ।

भिक्षुः—श्रुतं मया कौशिकमनुपदं तदाश्रमान्मिथिलां प्रति प्रचलिताविति । ( विलोक्य, सत्रासम् ) कथमिमौ तावित एवाभिवर्तेते । तदस्य निशाचरवैरिणो रामस्य पुरतः स्थातुमनुचितमावयोः ।

( निष्क्रान्तौ )

—प्रसन्नराघवे

# अष्टत्रिंशः पाठः ।

## सश्लोकः शिलाखंडः ।

एकदा नर्मदायां महाह्रदे जालकैरेकः शिलाखण्ड ईषद् भ्रंशिताक्षरः कश्चिद् दृष्टः । तैश्च परिचिन्तितम् । इदमत्र लिखितमिव किंचिद्भाति । नूनमिदं राजनिकटं नेयमिति बुद्ध्या भोजसदसि समानीतम् । तदाकर्ण्य भोजः प्राह । पूर्वं भगवता हनूमता श्रीमद्रामायणं कृतम् । तदत्र ह्रदे प्रक्षेपितमिति श्रुतमस्ति । ततः किमिदं लिखितमित्यवश्यं विचार्यमिति लिपिज्ञानं कार्यम् । जतुपरीक्षयाक्षराणि परिज्ञाय पठति । तत्र चरणद्वयमानुपूर्व्या-लब्धम् ।

> अयि खलु विषमः पुराकृतानां
> भवति हि जन्तुषु कर्मणां विपाकः ॥

ततो भोजः प्राह । एतस्य पूर्वार्धं कथ्यतामिति । तदा भवभूतिराह—

> क नु कुलमकलङ्कमायताक्ष्याः
> क नु रजनीचरसंगमापवादः ।
> अयि खलु विषमः पुराकृतानां
> भवति हि जन्तुषु कर्मणां विपाकः ॥ १ ॥

ततो भोजस्तत्र ध्वनिदोषं मन्वानस्तदेव पूर्वार्धमन्यथा पठति स्म—

क्व जनकतनया क्व रामजाया
क्व च दशकन्धरमन्दिरे निवासः ।
अपि खलु विषमः पुराकृतानां
भवति हि जन्तुषु कर्मणां विपाकः ॥ २ ॥

ततो भोजः कालिदासं प्राह । सुकवे, त्वमपि कवित्वदयं पठेति । स आह—

शिवशिरसि शिरांसि यानि रेजुः
शिव शिव तानि लुठन्ति गृध्रपादे ।
अपि खलु विषमः पुराकृतानां
भवति हि जन्तुषु कर्मणां विपाकः ॥ ३ ॥

ततस्तस्य शिलाखण्डस्य पूर्वपुटे अनुशोधनेन कालिदासपठितं तमेव दृष्ट्वा राजा भृशं शुशोच ।

—भोजप्रबन्धे

---

## एकोनचत्वारिंशः पाठः ।

विश्वगुणादर्शचम्पू is written by वेङ्कटाध्वरि रघुनाथ दीक्षित in the middle of the seventeenth Century A. D. He lived at अर्सनिपल, a village near Kanchi in Madras Presidency. चम्पू is a variety of mixed poetry—गद्यपद्यात्मक. As the title indicates, it describes in 53 Chapters the merits (and demerits also) of the different places in India through the conversation of two demi-gods moving in an aeroplane in the sky.

## महाराष्ट्रवर्णनम् ।

विश्वावसुः कौतुकस्पृहया कदाचिद्विमानमारुह्य समानवेषम् ।
कृशानुविश्वावसुनामधेयं गन्धर्वयुग्मं गगने चचार ॥ १ ॥

तत्र—

कृशानुरत्याग्रतः पुरोभागिपदं गतः ।
विश्वावसुरभूद्गिरागुणग्रहणकौतुकी ॥ २ ॥

अथ विमानं मुहुरमानयन्घनजलदमरीचिभिर्मूर्ध्निवेश्य सविस्मयमीषत्सुरिस्य विश्वावसुः—

कत्यौषधीः कति तरूंकति वा महीध्रान्
कत्यम्बुधीन्कति नदीः कति पुंस एतान् ।
कत्यङ्गनास्त्यमरद्रुमः कति नाथ देशान्
मन्ये तथैव महिमा नहि भाति पृथ्वी ॥ ३ ॥

इत्यतो गच्छन्पुरतोऽवलोक्य सबहुमानम्—

महाराष्ट्राभिख्यो मधुरजलसान्द्रो निरुपमः
प्रकाशो देशोऽयं सुरपुरनिकाशो विजयते ।
गृहस्था यत्रामी गुणगणधराः केऽपि विभवैः
समृद्धाः श्रद्धातो मुहुरतिथिपूजां विदधते ॥ ४ ॥

कृशानुः—सखे किं प्राक्कालीनचरित्रमधुना कथयसि । अधुना किल कलिमालिन्यादीदृशी रीतिरेतद्देशवासिनामासीत् ।

तथाहि—

अपारैर्व्यापारैरहरिह नयन्तोऽशनदशा—
स्वयं स्नाताः सन्ध्यां विदधति न जातु स्वसमये ।

## चत्वारिंशः पाठः ।

*मालविकाग्निमित्रं is a play of five acts describing the love* story of king अग्निमित्र and मालविका reigning in विदिशा. This it taken to be the first play of कालिदास.

### मध्याह्नः ।

वैतालिकः–विजयतां देवः । उपारूढो मध्याह्नः । तथा हि–

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि ।
बिन्दूत्क्षेपान् पिपासुः परिपतति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः समग्रैस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः ॥ १ ॥

विदूषकः–अविहा अविहा । ब्राह्मणस्य भोजनवेला संवृत्ता अत्रभवतोऽपि । उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति ।

—मालविकाग्निमित्रे

---

## एकचत्वारिंशः पाठः ।

विक्रमोर्वशीयं is a play of five acts describing the love of पुरूरवस् for उर्वशी and their final union. This is the second play of कालिदास.

### भोजनसमयः ।

विदूषकः–तिष्ठतु तावद्भवतो धीरता । बुभुक्षितस्य ब्राह्मणस्य जीवितमवलम्बतां भवान् । समयः खलु स्नानभोजनं सेवितुम् ।

राजाः—( ऊर्ध्वमवलोक्य ) गतमर्धं दिवसस्य ।

उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरि कर्णिकारमुकुलान्यालीयते षट्पदः ।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैष पञ्जरशुकः क्लान्तो जलं याचते ॥ १ ॥

—विक्रमोर्वशीये

---

## द्विचत्वारिंशः पाठः ।

### इन्दुमतीवरणम् ।

इक्ष्वाकुवंश्यः ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत् ।
काकुत्स्थशब्दं यत उन्नतेच्छाः श्लाघ्यं दधत्युत्तरकोसलेन्द्राः ॥१॥
महेन्द्रमास्थाय महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः ॥ २ ॥
ऐरावतास्फालनविश्लथं यः संघट्टयन्नङ्गदमङ्गदेन ।
उपेयुषः स्वामपि मूर्तिमग्र्यामर्धासनं गोत्रभिदोऽधितष्ठौ ॥ ३ ॥
जातः कुले तस्य किलोरुकीर्तिः कुलप्रदीपो नृपतिर्दिलीपः ।
अतिष्ठदेकोनशतक्रतुत्वे शक्राभ्यसूयाविनिवृत्तये यः ॥ ४ ॥
यस्मिन्महीं शासति वाणिनीनां निद्रां विहारार्धपथे गतानाम् ।
वातोऽपि नास्रंसयदंशुकानि को लम्बयेदाहरणाय हस्तम् ॥ ५॥
पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता ।
चतुर्दिगावर्जितसंभृतां यो मृत्पात्रशेषामकरोद्विभूतिम् ॥ ६ ॥
आरूढमद्रीनुदधीन्वितीर्णं भुजंगमानां वसतिं प्रविष्टम् ।
ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयालम् ॥७॥
असौ कुमारस्तमजोऽनुजातस्त्रिविष्टपस्येव पतिं जयन्तः ।
गुर्वीं धुरं यो भुवनस्य पित्रा धुर्येण दम्यः सदृशीं बिभर्ति ॥ ८ ॥

कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः ।
त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥ ९ ॥
ततः सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत्संवरणस्रजेव ॥ १० ॥
सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥ ११ ॥
तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृदाबभाषे ।
आर्ये व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥ १२ ॥
सा चूर्णगौरं रघुनन्दनस्य धात्रीकराभ्यां करभोपमोरूः ।
आसञ्जयामास यथाप्रदेशं कण्ठे गुणं मूर्तमिवानुरागम् ॥ १३ ॥
तया स्रजा मङ्गलपुष्पमय्या विशालवक्षःस्थललम्बया सः ।
अमंस्त कण्ठार्पितबाहुपाशां विदर्भराजावरजां वरेण्यः ॥ १४ ॥

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ १५ ॥

—रघुवंशे

---

## त्रिचत्वारिंशः पाठः ।

### बालक्रीडा ।

महोत्सवे तत्र समागतानां गन्धर्वविद्याधरसुन्दरीणाम् ।
संभाषितानां गिरिराजपुत्र्या गृहेऽभवन्मङ्गलगीतकानि ॥ १ ॥
सुमङ्गलोपायनपात्रहस्तास्तं मातरो मातृवदभ्युपेताः ।
विधाय दूर्वाक्षतकानि मूर्ध्नि निन्युः स्वमङ्कं गिरिजातनूजम् ॥२॥
वाता ववुः सौख्यकराः प्रसेदुराशा विधूमो हुतभुग्दिदीपे ।
जलान्यभूवन्विमलानि तस्मिन्नुत्सवेऽन्तरिक्षं प्रससाद सद्यः ॥ ३ ॥

इत्थं महेशाद्रिसुतासुतस्य जन्मोत्सवे संमदयांचकार ।
चराचरं विश्वमशेषमेतत्परं चकम्पे किल तारकश्रीः ॥ ४ ॥
ततः कुमारः समुदां निदानैः स बाललीलाचरितैर्विचित्रैः ।
गिरीशगौर्योर्हृदयं जहार मुदे न हृद्या किमु बालकेलिः ॥ ५ ॥
महेश्वरः शैलसुता च दर्पात्सतर्षमेकेन मुखेन गाढम् ।
अजातदन्तानि मुखानि सूनोर्मनोहराणि क्रमतश्चुचुम्ब ॥ ६ ॥
कचित्स्खलद्भिः कचिदस्खलद्भिः कचित्प्रकम्पैः कचिदप्रकम्पैः ।
बालः स लीलाचलनप्रयोगैस्तयोर्मुदं वर्धयति स्म पित्रोः ॥ ७ ॥
अहेतुहासच्छुरिताननेन्दुर्गृहाङ्गणक्रीडनधूलिधूम्रः ।
मुहुर्वदन् किंचिदलक्षितार्थं मुदं तयोरङ्कगतस्ततान ॥ ८ ॥
गृह्णन्विषाणे हरयानकस्य स्पृशन्नुमाकेसरिणं सलीलम् ।
स भृङ्गिणः सूक्ष्मतरं शिखाग्रं कर्षन्प्रभूय प्रमदाय पित्रोः ॥ ९ ॥
एको नव द्वौ दश पञ्च शतेत्यजीगणत्सारमङ्गुलं प्रसार्य ।
महेशकण्ठोरगदन्तपङ्क्तिं नदङ्गुलः शैशवमौग्ध्यमैशि ॥ १० ॥
कपर्दिकण्ठान्तकपालदाम्नोऽङ्गुलिं प्रवेश्याननकोटरेषु ।
दन्तानुपातुं रभसी बभूव मुक्ताफलभ्रान्तिवशात् कुमारः ॥११॥
शम्भोः शिरोऽन्तः सरितस्तरंगान्विगाह्य गाढं शिशिराम्भसेन ।
स जातजाड्यं निजपाणिपद्ममतापयद्भालविलोचनाग्नौ ॥१२॥
किंचिच्चलं भंगुरकंधरस्य नमज्जटाजूटधरस्य शंभोः ।
प्रलम्बमाने किल कौतुकेन चिरं चुचुम्बे मुकुटेन्दुखण्डम् ॥१३॥

इति बहुविधं बालक्रीडाविचित्रविचेष्टितं
ललितललितं सान्द्रानन्दं मनोहरमाचरन् ।
व्यलभत परां वृद्धिं षष्ठे दिने नवयौवनं
स किल सकलं शास्त्रं शस्त्रं विवेद विमुग्धया ॥१४॥

—कुमारसंभवे

---

# चतुश्चत्वारिंशः पाठः ।

## सेनापतेः पुष्पमित्रस्य लेखः ।

कञ्चुकी—अयमिदानीं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात्सप्राभृतको लेखः प्राप्तः । प्रत्यक्षीकरोत्वेनं देवः । ( राजा सहसोत्थाय प्राभृतकं सोपचारं परिगृह्य शिरसि कृत्वा परिजनायार्पयति । लेखं च नाट्येन उद्वेष्टयति । उपविश्य वाचयति । ) स्वस्ति । यज्ञशरणात्सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात्परिष्वज्यानुदर्शयति । विदितमस्तु । योऽसौ राजसूययज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं गोप्तारं वसुमित्रमादिश्य संवत्सरोपावर्तनीयो निरर्गलस्तुरगो विसृष्टः स सिन्धोर्दक्षिणे रोधसि चरन्नश्वानीकेन यवनानां प्रार्थितः । तत उभयोः सेनयोर्महानासीत्सम्मर्दः ।

> ततः परान्पराजित्य वसुमित्रेण धन्विना ।
> प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः ॥ १ ॥

सोऽहमिदानीमंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये । तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति ।

राजा—अनुगृहीतोऽस्मि ।

परिव्राजिका—दिष्ट्या पुत्रविजयेन दम्पती वर्धेते ।

—मालविकाग्निमित्रे—

# पञ्चचत्वारिंशः पाठः ।

## कपटपत्रम् ।

भागुरायणः—कुमार अयं लेखः । राक्षसनामाङ्कितेयं मुद्रा ।

मलयकेतुः—मुद्रां परिपालयन्नुद्घाट्य दर्शय ।

भागुरायणः—( तथा कृत्वा दर्शयति । )

मलयकेतुः—( वाचयति । ) स्वस्ति । यथास्थानं कुतोऽपि कोऽपि कमपि पुरुषविशेषमवगमयति । अस्मत्प्रतिपक्षं निराकृत्य दर्शिता चापि सत्यता सत्यवादिना । सांप्रतमेतेषामपि प्रथममुपन्यस्तसन्धीनामस्मत्सुहृदां पूर्वप्रतिज्ञातसन्धिपरिपणनप्रोत्साहनेन सत्यसन्धः प्रीतिमुत्पादयितुमर्हति । एतेऽप्येवमनुगृहीताः सन्तः स्वाश्रयविनाशेनोपकारिणमाश्रयिष्यन्ति । अविस्मृतमेतत्सत्यवतः स्मारयामः । एतेषां मध्ये केचिदरेः कोषदण्डाभ्यामर्थिनः केचिद्विषयेणेति । अलंकारत्रयं च सत्यवता यदनुप्रेषितं तदुपगतम् । मयापि लेखस्याशून्यार्थं किंचिदनुप्रेषितं तदुपगमनीयम् । वाचिकं चाप्ततमादस्माच्छ्रोतव्यमिति ।

—मुद्राराक्षसे

# षट्चत्वारिंशः पाठः ।

## तारापीडस्य लेखः ।

चन्द्रापीडः स्कन्धावारं प्रविश्यैव पितुः समीपादागतमभि-ज्ञाततरमात्मनो लेखहारकमद्राक्षीत् । धृततुरंगमश्च प्रीतिविस्फारितेन चक्षुषा दूरादेवापृच्छत् । अङ्ग कच्चित्कुशली तातः सह सर्वेण परिजनेनाम्बा च सर्वान्तःपुरैरिति । अथासावुपसृत्य प्रणामानन्तरं देव यथाज्ञापयसीत्यभिधाय लेखद्वितयमर्पयाम्बभूव । युवराजस्तु शिरसि कृत्वा स्वयमेव च तदुन्मुच्य क्रमशः पपाठ ।

स्वस्ति । उज्जयिनीतः सकलराजन्यशिरश्शेखरीकृतचर-णारविन्दः परममाहेश्वरो महाराजाधिराजो देवस्तारापीडः सर्वगु-णायतनं चन्द्रापीडमुत्तमाङ्गे चुम्बन्नृपमौलिमणीनिचयचुम्बितचु-म्बे चुम्बनपूर्वमाह । कुशलिन्यः प्रजाः । किन्तु कियानपि कालो भवतोऽदृष्टस्य गतः । बलवदुत्कण्ठितं मां हृदयम् । देवी च महान्तःपुरैरभिभूयमाना । अतो लेखवाचनानन्तरमेव प्रयाणपरता भवेरिति । शुकनासेनापि द्वितीयेऽस्मिन्नुद्देशार्थं विलिखितमवगम्यताम् । अथ यथाज्ञापयति तात इत्युक्त्वा सद्यैव च युवराजः प्रयाणमघोषयत् ।

—कादम्बर्याः

# सप्तचत्वारिंशः पाठः ।

## प्रकीर्णपद्यानि ।

किं काव्येन कवेस्तेन किं काण्डेन च धन्विनः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ १ ॥
सूर्यश्चन्द्रो घनो वृक्षो नदी धेनुश्च सज्जनः ।
एते परोपकाराय विधात्रैव विनिर्मिता ॥ २ ॥
गुणदोषौ गुणी गृह्णन्निन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥ ३ ॥
एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् ।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥ ४ ॥
क्षणशः कणशश्चैव विद्यामर्थं च सञ्चयेत् ।
क्षणत्यागे कुतो विद्या कणत्यागे कुतो धनम् ॥ ५ ॥
कमले कमला शेते हरः शेते हिमालये ।
क्षीराब्धौ च हरिः शेते मन्ये मत्कुणशङ्कया ॥ ६ ॥
कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरूढकविताशाखं वन्दे वाल्मीकिकोकिलम् ॥ ७ ॥
अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शम्भुर्भगवान्बादरायणः ॥ ८ ॥
अश्लोको हि भवति श्लोको यत्र तिष्ठन्ति साधवः ।
लकारो लुप्यते तत्र यत्र तिष्ठन्त्यसाधवः ॥ ९ ॥
कान्पृच्छामः सुराः स्वर्गे निवसामो वयं भुवि ।
किं वा काव्यरसः साधुः किं वा स्वादीयसी सुधा ॥१०॥
तावद्भा भारवेर्भाति यावन्माघस्य नोदयः ।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः ११ ॥

स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः।
आदौ व्याकरणं काव्यमनु जाम्बवतीजयम् ॥ १२ ॥
यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षो हृदयवसतिः पंचबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥ १३ ॥
वयं कालिदासाद्याः कवयो वयमप्यमी।
पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥ १४ ॥

—नानाकाव्येषु।

---

## अष्टचत्वारिंशः पाठः।

प्रश्नोत्तरमालिका is a very good piece of advice in the form of questions and answers given by शंकराचार्य, a great Indian philosopher of अद्वैत school, who flourished in the eighth Century A. D.

### प्रश्नोत्तररत्नमालिका।

भगवन्किमुपादेयं गुरुवचनं हेयमपि च किमकार्यम्।
को गुरुरधिगततत्त्वः शिष्यहितायोद्यतः सततम् ॥ १ ॥
कः पथ्यतरो धर्मः कः शुचिरिह यस्य मानसं शुद्धम्।
कः पण्डितो विवेकी किं विषमवधीरणा गुरुषु ॥ २ ॥
किं संसारे सारं बहुशोऽपि विचिन्त्यमानमिदमेव।
किं मनुजेष्विष्टतमं स्वपरहितायोद्यतं जन्म ॥ ३ ॥

कस्माद्भयमिह मरणादन्धादिह को विशिष्यते रागी ।
कः शूरो यो ललनालोचनबाणैर्न च व्यथितः ॥ ४ ॥
को नरकः परवशता किं सौख्यं सर्वसंगविरतिर्या ।
किं सत्यं भूतहितं प्रियं च किं प्राणिनामसवः ॥ ५ ॥
किं मरणं मूर्खत्वं किं चानर्घं यदवसरे दत्तम् ।
आमरणात्किं शल्यं प्रच्छन्नं यत्कृतं पापम् ॥ ६ ॥
कुत्र विधेयो यत्नो विद्याभ्यासे सदौषधे दाने ।
अवधीरणा क्व कार्या खलपरयोषित्परधनेषु ॥ ७ ॥
कः साधुः सद्वृत्तः कमधममाचक्षते त्वसद्वृत्तम् ।
केन जितं जगदेतत्सत्यतितिक्षावता पुंसा ॥ ८ ॥
कस्य वशे प्राणिगणः सत्यप्रियभाषिणो विनीतस्य ।
क्व स्थातव्यं न्याय्ये पथि दृष्टादृष्टलाभाढ्ये ॥ ९ ॥

—शंकराचार्यस्य

---

## एकोनपञ्चाशः पाठः ।

### वर्षाकालः ।

अयं स कालः संप्राप्तः समयोऽद्य जलागमः ।
संपश्य त्वं नभो मेघैः संवृतं गिरिसन्निभैः ॥ १ ॥
नवमासधृतं गर्भं भास्करस्य गभस्तिभिः ।
पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥ २ ॥
शक्यमम्बरमारुह्य मेघसोपानपङ्क्तिभिः ।
कुटजार्जुनमालाभिरलंकर्तुं दिवाकरः ॥ ३ ॥
सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वपि च पाण्डुभिः ।
स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ॥ ४ ॥

## पञ्चाशः पाठः ।

### हेमन्तवर्णनम् ।

अयं स कालः सम्प्राप्तः प्रियो यस्ते प्रियंवद ।
अलंकृत इवाभाति येन संवत्सरः शुभः ॥ १ ॥
नीहारपरुषो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ २ ॥
प्राज्यकामा जनपदाः सम्पन्नतरगोरसाः ।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥ ३ ॥
सेवमाने दिशं सूर्ये दृढमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥ ४ ॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च सांप्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥ ५ ॥
अत्यन्तसुखसञ्चारा मध्याह्ने स्पर्शतः सुखाः ।
दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ ६ ॥
मृदुसूर्याः सुनीहाराः पटुशीताः समारुताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति सांप्रतम् ॥ ७ ॥
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः ।
शीतवृद्धतरायामास्त्रियामा यान्ति सांप्रतम् ॥ ८ ॥
रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ ९ ॥
ज्योत्स्ना तुषारमलिना पौर्णिमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते न च शोभते ॥ १० ॥
प्रकृत्या शीतलस्पर्शो हिमवृद्धश्च सांप्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ ११ ॥

बाष्पछन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १२ ॥
मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १३ ॥
जराजर्जरितैः पत्रैः शीर्णकेसरकर्णिकैः ।
नालशेषा हिमध्वस्ता न भान्ति कमलाकराः ॥ १४ ॥

—अरण्यकाण्डे

---

## एकपञ्चाशः पाठः ।

### शिशुपालस्य सन्तापः ।

वैशम्पायन उवाच—

ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह ।
अन्तर्वेदीं प्रविविशुः सत्कारार्हा महर्षयः ॥ १ ॥
ततो भीष्मोऽब्रवीद्राजन्धर्मराजं युधिष्ठिरम् ।
क्रियतामर्हणं राज्ञां यथार्हमिति भारत ॥ २ ॥

युधिष्ठिर उवाच—

कस्मै भवान्मन्यतेऽर्घमेकस्मै कुरुनन्दन ।
उपनीयमानं युक्तं च तन्मे ब्रूहि पितामह ॥ ३ ॥

वैश० उ०—

ततो भीष्मः शान्तनवो बुद्ध्या निश्चित्य वीर्यवान् ।
वार्ष्णेयं मन्यते कृष्णं पूजनीयतमं भुवि ॥ ४ ॥
एष ह्येषां समस्तानां तेजोबलपराक्रमैः ।
मध्ये तपन्निवाभाति ज्योतिषामिव भास्करः ॥ ५ ॥

वयं न तु भयादस्य कौन्तेयस्य महात्मनः ।
प्रयच्छामः करान्सर्वे न लोभान्न च सान्त्वनात् ॥ १८ ॥
अस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
करानस्मै प्रयच्छामः सोऽयमस्मान्न मन्यते ॥ १९ ॥
योऽयं वृष्णिकुले जातो राजानं हतवान्पुरा ।
जरासन्धमहात्मानमन्यायेन दुरात्मवान् ॥ २० ॥
अद्य धर्मात्मता चैव व्यपकृष्टा युधिष्ठिरात् ।
दर्शितं कृपणत्वं च कृष्णेऽर्घस्य निवेदनात् ॥ २१ ॥
दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः ।
वासुदेवोऽप्ययं दृष्टः सर्वमेतद्यथातथम् ॥ २२ ॥

—सभापर्वणि

---

## द्वापञ्चाशः पाठः ।

### शिशुपालस्य वधः ।

भीष्म उवाच—

क्षत्रियः क्षत्रियं जित्वा रणे रणकृतां वरः ।
यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः ॥ १ ॥
अस्यां हि समितौ राज्ञामेकमप्यजितं युधि ।
न पश्यामि महीपालं सात्वतीपुत्रतेजसा ॥ २ ॥
न हि केवलमस्माकमयमर्च्यतमोऽच्युतः ।
त्रयाणामपि लोकानामर्चनीयो महाभुजः ॥ ३ ॥
कृष्णेन हि जिता युद्धे बहवः क्षत्रियर्षभाः ।
जगत्सर्वं च वार्ष्णेये निखिलेन प्रतिष्ठितम् ॥ ४ ॥

ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः ।
वैश्यानां धान्यधनवान् शूद्राणामेव जन्मतः ॥ ५ ॥
पूज्यतायां च गोविन्दे हेतू द्वावपि संस्थितौ ।
वेदवेदांगविज्ञानं बलं चाभ्यधिकं तथा ॥ ६ ॥
तमिमं सम्यसंपन्नमाचार्यं पितरं गुरुम् ।
अर्घ्यमर्चितमर्चार्हं सर्वे संक्षन्तुमर्हथ ॥ ७ ॥
अयं तु पुरुषो बालः शिशुपालो न बुध्यते ।
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते ॥ ८ ॥

शिशु० उ०—

विभीषिकाभिर्बह्वीभिर्भीषयन्सर्वपार्थिवान् ।
न व्यपत्रपसे कस्माद्वृद्धः सन्कुलपांसन ॥ ९ ॥
नावि नौरिव सम्बद्धा यथान्धो वान्धमन्वियात् ।
तथाभूता हि कौरव्या येषां भीष्म त्वमग्रणीः ॥ १० ॥
अवलिप्तस्य मूर्खस्य केशवं स्तोतुमिच्छतः ।
कथं भीष्म न ते जिह्वा शतधेयं विदीर्यते ॥ ११ ॥
यद्यनेन हता बाल्ये शकुनिश्चित्रमत्र किम् ।
तौ वाश्ववृषभौ भीष्म यौ न युद्धविशारदौ ॥ १२ ॥
चेतनारहितं काष्ठं यद्यनेन निपातितम् ।
पादेन शकटं भीष्म तत्र किं कृतमद्भुतम् ॥ १३ ॥
वल्मीकमात्रः सप्ताहं यद्यनेन धृतोऽचलः ।
तदा गोवर्धनो भीष्म न तच्चित्रं मतं मम ॥ १४ ॥
गोघ्नः स्त्रीघ्नश्च सन्भीष्म त्वद्वाक्याद्यदि पूज्यते ।
एवंभूतश्च यो भीष्म कथं स स्तवमर्हति ॥ १५ ॥
असौ मतिमतां श्रेष्ठो य एष जगतः प्रभुः ।
जनार्दनः सर्वमिति तत्सर्वं वितथं ध्रुवम् ॥ १६ ॥

को हि धर्मिणमात्मानं जानन् ज्ञानविदां वरः ।
कुर्याद्यथा त्वया भीष्म कृतं धर्ममवेक्षता ॥ १७ ॥

भी० उ०—

उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये ।
यत्तु वक्ष्यामि तत्सर्वं शृणुध्वं वसुधाधिपाः ॥ १८ ॥
एष तिष्ठति गोविंदः पूजितोऽस्माभिरच्युतः ।
यस्य वस्त्वरते बुद्धिर्मरणाय स माधवम् ॥ १९ ॥
कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम् ।
यावदस्यैव देवस्य देहं विशतु पातितः ॥ २० ॥

शि० उ०—

आह्वये त्वां रणं गच्छ मया सार्धं जनार्दन ।
यावदद्य निहन्मि त्वां सहितं सर्वपाण्डवैः ॥ २१ ॥

कृष्ण उ०—

शृण्वन्तु मे महीपाला येनैतत्क्षमितं मया ।
अपराधशतं क्षाम्यं मातुरस्यैव याचने ॥ २२ ॥
दत्तं मया याचितं च तद्वै पूर्णं हि पार्थिवाः ।
अधुना मारयिष्यामि पश्यतां वो महीक्षिताम् ॥ २३ ॥

वै० उ०—

एवमुक्त्वा यदुश्रेष्ठश्चेदिराजस्य तत्क्षणात् ।
व्यपाहरच्छिरः क्रुद्धश्चक्रेणामित्रकर्षणः ॥ २४ ॥
अनभ्रे प्रववर्षं द्यौः पपात ज्वलिताशनिः ।
कृष्णेन निहते चैद्ये चचाल च वसुन्धरा ॥ २५ ॥

नो हि भूभृदत्युच्छ्रितोऽपि परेरप्यारुह्यमाणमात्मानं न चेतयते। न च शक्तः साध्यं साधनं वा विभज्य वर्तितुम्। अयथावृत्तश्च कर्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते। न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय। अतिक्रान्तशासनाश्च प्रजा यत्किञ्चनवादिन्यो यथाकथंचिद्वर्तिन्यः सर्वाः स्थितीः संकिरेयुः। निर्मर्यादश्च लोको लोकादितोऽमुतश्च स्वामिनमात्मानं च भ्रंशयेत्। आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा। दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति। तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुः, अर्थदर्शनेष्वसामर्थ्यात्। अतो विहाय बाह्यविद्यास्वभिषंगमागमयस्व दण्डनीतिं कुलविद्यां, तदर्थानुष्ठानेन चावर्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्वीमिति।

—दशकुमारचरिते

---

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ ३ ॥

न ततो हि सहायार्थे माता भार्या च तिष्ठति ।
न पुत्रमित्रौ न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥ ४ ॥

बलवानप्यशक्तोऽसौ धनवानपि निर्धनः ।
श्रुतवानपि मूर्खश्च यो धर्मविमुखो जनः ॥ ५ ॥

इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
गत्वा निरौषधस्थानं स रोगी किं करिष्यति ॥ ६ ॥

जरां मृत्युं भय व्याधिं यो जानाति स पण्डितः ।
स्वस्थस्तिष्ठेन्निषीदेद्वा स्वपेद्वा केनचिद्धसेत् ॥ ७ ॥

तुल्यजातिवयोरूपान्हतान्पश्यति मृत्युना ।
न हि तत्रास्ति ते त्रासो वज्रबद्धृदयं तव ॥ ८ ॥ इति ।

ततो वैराग्यमापन्नो वत्सराजो भोजं क्षमस्वेत्युक्त्वा प्रणम्य तं च रथे निवेश्य नगराद्बहिर्वने तमसि गृहमागमय्य भूमिगृहान्तरे निक्षिप्य भोजं ररक्ष । स्वयमेव कृत्रिमविद्याविद्भिः सकुण्डलं स्फुरद्वक्त्रं निमीलितनेत्रं भोजकुमारमस्तकं कारयित्वा तदादाय कनिष्ठो राजभवनं गत्वा राजानं नत्वा प्राह । श्रीमता यदादिष्टं तत्साधितमिति । ततो राजा च पुत्रवधं ज्ञात्वा तमाह । वत्सराज, खड्गप्रहारसमये तेन पुत्रेण किमुक्तमिति । वत्सस्तत्पत्रमदात् । राजा स्वभार्याकरेण दीपमानीय तानि पत्राक्षराणि

प' ।

मान्धाता च महीपतिः कृतयुगालङ्कारभूतो गतः
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः ।
अन्ये चापि युधिष्ठिरप्रभृतयो याता दिवं भूपते
नैकेनापि समं गता वसुमती मुञ्ज त्वया यास्यति ॥ १ ॥

राजा च तदर्थं ज्ञात्वा शय्यातो भूमौ पपात । ततश्च देवीकरकमलचालितचेलाञ्चलानिलेन लब्धसंज्ञो भूपो देवि मा मां स्पृश हा हा पुत्रघातिनमिति विलपन्नुर इव द्वारपालानाहूय ब्राह्मणानानयेत्याह । ततः स्वाज्ञया समागतान्ब्राह्मणानसौ मया पुत्रो हतस्तस्य प्रायश्चित्तं वदध्वमिति वदन्तं ते समूचुः । राजन्, सहसा वह्निमाविशेति ।

—भोजप्रबन्धे

---

## पञ्चपञ्चाशः पाठः ।

### भोजस्य राज्यप्राप्तिः । द्वितीयो भागः ।

ततः सभायां बुद्धिसागरः प्राह । यथा त्वं [illegible]-
[illegible]धमो वत्सराजः । तव किल राज्यं दत्त्वा सिन्धुलदेवेन त्वदुत्सङ्गे भोजः स्थापितः । तच्च त्वया सिन्धुदेवानुकृतम् ।

[illegible] वीतवे दुराचार ।
[illegible] तथाऽपराधे ऽन्येष यदा कृता भवति ॥ १ ॥
[illegible] भवति विश्लतिम् ।

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ ३ ॥

न ततो हि सहायार्थे माता भार्या च तिष्ठति ।
न पुत्रमित्रौ न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥ ४ ॥

बलवानप्यशक्तोऽसौ धनवानपि निर्धनः ।
श्रुतवानपि मूर्खश्च यो धर्मविमुखो जनः ॥ ५ ॥

इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
गत्वा निरौषधस्थानं स रोगी किं करिष्यति ॥ ६ ॥

जरां मृत्युं भयं व्याधिं यो जानाति स पण्डितः ।
स्वस्थस्तिष्ठेन्निषीदेद्वा स्वपेद्वा केनचिद्धसेत् ॥ ७ ॥

तुल्यजातिवयोरूपान्हतान्पश्यति मृत्युना ।
न हि तत्रास्ति ते त्रासो वज्रवद्धृदयं तव ॥ ८ ॥ इति ।

ततो वैराग्यमापन्नो वत्सराजो भोजं क्षमस्वेत्युक्त्वा प्रणम्य तं च रथे निवेश्य नगराद्बहिर्वने तमसि गृहमागमय्य भूमिगृहान्तरे निक्षिप्य भोजं ररक्ष । स्वयमेव कृत्रिमविद्याविद्भिः सकुण्डलं स्फुरद्वक्त्रं निमीलितनेत्रं भोजकुमारमस्तकं कारयित्वा तदादाय कनिष्ठो राजभवनं गत्वा राजानं नत्वा प्राह । श्रीमता यदादिष्टं तत्सम्पादितमिति । ततो राजा च पुत्रवधं ज्ञात्वा प्राह । वत्सराज, खड्गप्रहारसमये तेन पुत्रेण किमुक्तमिति । वत्सराजस्तत्पत्रमदात् । राजा स्वभार्याकरेण दीपमानीय तानि पत्राक्षराणि वाचयति ।

मान्धाता च महीपतिः कृतयुगालंकारभूतो गतः
सेतुर्येन महोदधौ विरचित क्वासौ दशास्यान्तकः।
अन्ये चापि युधिष्ठिरप्रभृतयो याता दिवं भूपते
नैकेनापि समं गता वसुमती मुञ्ज त्वया यास्यति ॥ ६ ॥

राजा च तदर्थं ज्ञात्वा शय्यातो भूमौ पपात। ततश्च देवीकरकमलचालितचेलाञ्चलानिलेन ससंज्ञो भूत्वा देवि मा मां स्पृश हा हा पुत्रघातिनमिति विलपन्नुरग इव द्वारपालानानाय्य ब्राह्मणानानयेत्याह। ततः त्वरया समागतान्ब्राह्मणांस्तथा मया पुत्रो हतस्तस्य प्रायश्चित्तं वदध्वमिति वदन्तं ते तमूचुः। राजन्, सहसा वह्निमाविशेति।

—भोजप्रबन्धे

---

## पञ्चपञ्चाशः पाठः।

### भोजस्य राज्यप्राप्तिः। द्वितीयो भागः।

ततः समेत्य बुद्धिसागरः प्राह। यथा त्वं राजाधमस्तथैवामात्याधमो वत्सराजः। तेन किल राज्यं दत्त्वा सिन्धुलनृपेण तेन त्वदुत्संगे भोजः स्थापितः। तच्च त्वया पितृव्येणान्यत्कृतम्।

कतिपयदिवसस्थायिनि मदकारिणि यौवने दुरात्मानः।
विदधति तथाऽपराधं जन्मैव यथा वृथा भवति ॥ १ ॥
उपकारश्चापकारो यस्य व्रजति विस्मृतिम्।

पाषाणहृदयस्यास्य जीवतीत्यभिधा मुधा ॥ २॥
राज्ञि धर्मिणि धर्मिष्ठाः पापे पापपराः सदा
राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥ ३ ॥

ततो रात्रावेव वह्निप्रवेशानं निश्चिते राज्ञि सर्वे सामन्ताः पौराश्च मिलिताः। पुत्रं हत्वा पापभयाद्भीतो नृपतिर्वह्निं प्रविशतीति किंवदन्ती सर्वत्राजनि। ततो बुद्धिसागरो द्वारपालमाहूय न केनापि भूपालभवनं प्रवेष्टव्यमित्युक्त्वा नृपमन्तःपुरे निवेश्य सभायामेकाकी सन्नुपविष्टः। ततो राजमरणवार्तां श्रुत्वा वत्सराजः सभागृहमागत्य बुद्धिसागरं नत्वा शनैः प्राह। तात, मया भोजराजो रक्षित इति। बुद्धिसागरश्च कर्णे तस्य किमप्यकथयत्। तच्छ्रुत्वा वत्सराजश्च निष्क्रान्तः। ततो मुहूर्तेन कोऽपि करकलितदन्तीन्द्रदन्तदण्डो विरचितप्रत्यग्रजटाकलापः कर्पूरकरम्बितभासितोद्धर्तितसकलतनुर्मूर्तिमान् मन्मथ इव स्फटिककुण्डलमण्डितकर्णयुगलः कौशेयकौपीनो मूर्तिमांश्चन्द्रचूड इव सभां कापालिकः समागतः। तं वीक्ष्य बुद्धिसागरः प्राह। योगीन्द्र, कुत आगम्यते। कुत्र ते निवेशश्च। कापालिके त्वयि यश्चमत्कारकारी कलाविशेष औषधिविशेषोऽप्यस्ति। योगी प्राह—

देशे देशे भवनं भवने भवने तथैव भिक्षान्नम्।
सरसि च भवां सलिलं शिव शिव तत्त्वार्थयोगिनां पुंसाम् ॥१०॥
ग्रामे ग्रामे कुटी रम्या निर्झरे निर्झरे जलम्।
भिक्षायां सुलभं चान्नं विभवैः किं प्रयोजनम् ॥ २ ॥

देव, अस्माकं नैको देशः । सकलभूमण्डलं भ्रमामः । गुरूपदेशो तिष्ठामः । निखिलं भुवनतलं करतलामलकवत् पश्यामः । सर्पदष्टं विषव्याकुलं रोगग्रस्तं शस्त्रभिन्नशिरस्कं कालशिथिलितं, तात, तत्क्षणादेव विगलितसकलव्याधिसंचयं कुर्म इति ।

राजाऽपि कुड्यान्तर्हित एव श्रुतसकलवृत्तान्तः सभामागतः कापालिकं दण्डवत्प्रणम्य योगीन्द्र, रुद्रकल्प, परोपकारपरायण, महापापिना मया हतस्य पुत्रस्य प्राणदानेन मां रक्षेत्याह । अथ कापालिकोऽपि राजन , मा भैषीः । पुत्रस्ते न मरिष्यति । शिवप्रसादेन गृहमेष्यति । परं श्मशानभूमौ बुद्धिसागरेण सह होमद्रव्याणि प्रेषयेत्यवोचम् । ततो राज्ञा कापालिकेन यदुक्तं तत्सर्वं तथा कुर्विति बुद्धिसागरः प्रेषितः ।

ततो रात्रौ गूढरूपेण भोजोऽपि तत्र नदीपुलिने नीतः । योगिना भोजो जीवित इति प्रथा च समभूत् । ततो गजेन्द्रारूढो बन्दिभिः स्तूयमानो भेरीमृदंगादिघोषैर्जगद्बधिरयन्पौरामात्यपरिवृतो भोजराजो राजभवनमगात् । राजा च तमालिंग्य रोदिति । भोजोऽपि रुदन्तं मुञ्जं निवार्यास्तौषीत् । ततः सन्तुष्टो राजा निजासिंहासने तस्मिन्निवेशयित्वा छत्रचामराभ्यां भूषयित्वा तस्मै राज्यं ददौ । निजपुत्रेभ्यः प्रत्येकमेकैकं ग्रामं दत्त्वा परमप्रेमास्पदं जयन्तं भोजनिकटो निवेशयामास । ततः परलोकपरित्राणो

मुञ्जोऽपि निजपट्टराज्ञीभिः सह तपोवनभूमिं गत्वा परं तपस्तेपे। भोजभूपालश्च देवब्राह्मणप्रसादाद्राज्यं पालयामास।

—भोजप्रबन्ध

---

## षट्पञ्चाशः पाठः।

### विदुरनीतिः।

धृतराष्ट्र उवाच—

श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः।
अस्मिन्राजर्षिवंशे हि त्वमेकः प्राज्ञसंमतः॥ १॥

विदुर उवाच—

दुर्योधने सौबले च कर्णे दुःशासने तथा।
एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि॥ २॥
आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता।
यमर्था नापकर्षन्ति स वै पण्डित उच्यते॥ ३॥
निषेवते प्रशस्तानि निंदितानि न सेवते।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम्॥ ४॥
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते॥ ५॥
यस्य कृत्यं न जानन्ति मित्रं वा मंत्रितं परे।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते॥ ६॥
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते॥ ७॥

मुञ्जोऽपि निजपट्टराज्ञीभिः सह तपोवनभूमिं गत्वा परं तपस्तेपे।
भोजभूपालश्च देवब्राह्मणप्रसादाद्राज्यं पालयामास।

—भोजप्रबन्धे

---

## षट्पञ्चाशः पाठः।

### विदुरनीतिः।

धृतराष्ट्र उवाच—

श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः।
अस्मिन्राजर्षिवंशे हि त्वमेकः प्राज्ञसंमतः ॥ १ ॥

विदुर उवाच—

दुर्योधने सौबले च कर्णे दुःशासने तथा।
एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ २ ॥
आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता।
यमर्था नापकर्षन्ति स वै पण्डित उच्यते ॥ ३ ॥
निषेवते प्रशस्तानि निन्दितानि न सेवते।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥ ४ ॥
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ ५ ॥
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ ६ ॥
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ ७ ॥

सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः ।
सुसन्तोषः कापुरुषः स्वल्पकेनैव तुष्यति ॥ ६ ॥
अप्यहेरारुजन्दंष्ट्रां मा श्वेव निधनं व्रज ।
अपि वा संशयं प्राप्य जीवितेऽपि पराक्रमेः ॥ ७ ॥
अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन् ।
विनदन्वाऽथवा तूष्णीं व्योम्नीवापरिशङ्कितः ॥ ८ ॥
त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा ।
उत्तिष्ठ हे कापुरुष मा स्वाप्सीः शत्रुनिर्जितः ॥ ९ ॥
माऽस्तं गमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्वं माऽधो भूस्तिष्ठ गर्जितः ॥१०॥
मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ।
मा ह स्म कस्यचिद्गेहेऽजनि राज्ञः खरो मृदुः ॥ ११ ॥
कृत्वा मानुष्यकं कर्म सृत्वाऽऽजिं यावदुत्तमम् ।
धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते ॥ १२ ॥
अलब्ध्वा यदि वा लब्ध्वा नानुशोचति पण्डितः ।
आनन्तर्यं चारभते न प्राणानां धनायते ॥ १३ ॥
उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ।
धर्मं पुत्राग्रतः कृत्वा किंनिमित्तं हि जीवसि ॥ १४ ॥
यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ।
राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ॥ १५ ॥
श्रुतेन तपसा वापि श्रिया वा विक्रमेण वा ।
जनान्योऽभिभवत्यन्यान्कर्मणा हि स वै पुमान् ॥ १६ ॥
न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।
नृशंस्यामयशस्यां च दुःखां कापुरुषोचिताम् ॥ १७ ॥
निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ १८ ॥

एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ २१ ॥
द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ २२ ॥
द्वाविमौ पुरुषव्याघ्र सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ २३ ॥
चत्वारि ते तात गृहे वसन्तु श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी चानपत्या ॥ २४ ॥

—उद्योगपर्वणि

---

## सप्तपञ्चाशः पाठः ।

### ओजस्वि विदुलावचनम् ।

विदुला नाम राजन्या जगर्हे पुत्रमौरसम् ।
निर्जितं सिन्धुराजेन शयानं दीनचेतसम् ॥ १ ॥

विदुलोवाच—

अनन्दन मया जात द्विषतां हर्षवर्धन ।
न मया त्वं न पित्रा च जातः क्वाभ्यागतो ह्यसि ॥ २ ॥
निर्मन्युश्चाप्यसंख्येयः पुरुषः क्लीबसाधनः ।
यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ॥ ३ ॥
माऽऽत्मानमवमन्यस्व मैनमल्पेन बीभरः ।
मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर ॥ ४ ॥
उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ।
अमित्रान्नन्दयन्सर्वान्निर्मानो बन्धुशोकदः ॥ ५ ॥

सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः ।
सुसन्तोषः कापुरुषः स्वल्पकेनैव तुष्यति ॥ ६ ॥
अप्यरेरारुजन्दंष्ट्रां मा श्वेव निधनं व्रज ।
अपि वा संशयं प्राप्य जीवितेऽपि पराक्रमेः ॥ ७ ॥
अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन् ।
विनदन्वाऽथवा तूष्णीं व्योम्नीवापरिशङ्कितः ॥ ८ ॥
त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा ।
उत्तिष्ठ हे कापुरुष मा स्वाप्सीः शत्रुनिर्जितः ॥ ९ ॥
माऽस्तं गमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्वं माऽधो भूस्तिष्ठ गर्जितः ॥१०॥
मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ।
मा ह स्म कस्यचिद्गेहेऽजनि राज्ञः खरो मृदुः ॥ ११ ॥
कृत्वा मानुष्यकं कर्म सृत्वाऽऽजिं यावदुत्तमम् ।
धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते ॥ १२ ॥
अलब्ध्वा यदि वा लब्ध्वा नानुशोचति पण्डितः ।
आनन्तर्यं चारभते न प्राणानां धनायते ॥ १३ ॥
उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ।
धर्मं पुत्राग्रतः कृत्वा किं निमित्तं हि जीवसि ॥ १४ ॥
यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ।
राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ॥ १५ ॥
श्रुतेन तपसा वापि श्रिया वा विक्रमेण वा ।
जनान्योऽभिभवत्यन्यान्कर्मणा हि स वै पुमान् ॥ १६ ॥
न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।
नृशंस्यामयशस्यां च दुःखां कापुरुषोचिताम् ॥ १७ ॥
निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ १८॥

एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ २१ ॥
द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ २२ ॥
द्वाविमौ पुरुषव्याघ्र सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ २३ ॥
चत्वारि ते तात गृहे वसन्तु श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी चानपत्या ॥ २४ ॥

—उद्योगपर्वणि

---

## सप्तपञ्चाशः पाठः ।

### ओजस्वि विदुलावचनम् ।

विदुला नाम राजन्या जगर्हे पुत्रमौरसम् ।
निर्जितं सिन्धुराजेन शयानं दीनचेतसम् ॥ १ ॥

विदुलोवाच—

अनन्दन मया जात द्विषतां हर्षवर्धन ।
न मया त्वं न पित्रा च जातः क्वाभ्यागतो ह्यसि ॥ २ ॥
निर्मन्युश्चाप्यसंख्येयः पुरुषः क्लीबसाधनः ।
यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ॥ ३ ॥
माऽऽत्मानमवमन्यस्व मैनमल्पेन बीभरः
मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर ॥ ४ ॥
उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ।
अमित्रान्नन्दयन्सर्वान्निर्मानो बन्धुशोकदः ॥ ५ ॥

मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् ।
ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ॥ १९ ॥
एतावानेव पुरुषो यदमर्षी यदक्षमी ।
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ॥ २० ॥
सन्तोषो वै श्रियं हन्ति तथाऽनुक्रोश एव च ।
अनुत्थानभये चोभे निरीहो नाश्नुते महत् ॥ २१ ॥
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम् ।
परं विषहते यस्मात्तस्मात्पुरुष उच्यते ॥ २२ ॥
भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम् ।
कृपणानामसत्वानां मा वृत्तिमनुवर्तिथाः ॥ २३ ॥
अनु त्वा तात जीवन्तु ब्राह्मणाः सुहृदस्तथा ।
पर्जन्यमिव भूतानि देवा इव शतक्रतुम् ॥ २४ ॥
स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः ।
स लोके लभते कीर्तिं परत्र च शुभां गतिम् ॥ २५ ॥

—उद्योगपर्वणि

---

## अष्टपञ्चाशः पाठः ।

### अजविलापः

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥१॥
कुसुमान्यपि गात्रसंगमात्प्रभवन्त्यायुरपोहितुं यदि ।
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥२॥
अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः ।

मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् ।
ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ॥ १६ ॥
एतावानेव पुरुषो यदमर्षी यदक्षमी ।
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ॥ २० ॥
सन्तोषो वै श्रियं हन्ति तथाऽनुक्रोश एव च ।
अनुत्थानभये चोभे निरीहो नाश्नुते महत् ॥ २१ ॥
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम् ।
परं विषहते यस्मात्तस्मात्पुरुष उच्यते ॥ २२ ॥
भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम् ।
कृपणानामसत्त्वानां मा वृत्तिमनुवर्तिथाः ॥ २३ ॥
अनु त्वा तात जीवन्तु ब्राह्मणाः सुहृदस्तथा ।
पर्जन्यमिव भूतानि देवा इव शतक्रतुम् ॥ २४ ॥
त्वद्बाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः ।
स लोके लभते कीर्तिं परत्र च शुभां गतिम् ॥ २५ ॥

—उद्योगपर्वणि

---

## अष्टपञ्चाशः पाठः ।

### अजविलापः

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥१॥
कुसुमान्यपि गात्रसंगमात्प्रभवन्त्यायुरपोहितुं यदि ।
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥२॥
अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः ।

मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् ।
ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ॥ १९ ॥
एतावानेव पुरुषो यदमर्षी यदक्षमी ।
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ॥ २० ॥
सन्तोषो वै श्रियं हन्ति तथाऽनुक्रोश एव च ।
अनुत्थानभये चोभे निरीहो नाश्नुते महत् ॥ २१ ॥
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम् ।
परं विषहते यस्मात्तस्मात्पुरुष उच्यते ॥ २२ ॥
भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम् ।
कृपणानामसत्वानां मा वृत्तिमनुवर्तिथाः ॥ २३ ॥
अनु त्वा तात जीवन्तु ब्राह्मणाः सुहृदस्तथा ।
पर्जन्यमिव भूतानि देवा इव शतक्रतुम् ॥ २४ ॥
स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः ।
स लोके लभते कीर्तिं परत्र च शुभां गतिम् ॥ २५ ॥

—उद्योगपर्वणि

---

## अष्टपञ्चाशः पाठः ।

### अजविलापः

विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु ॥१॥
कुसुमान्यपि गात्रसंगमात्प्रभवन्त्यायुरपोहितुं यदि ।
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः ॥२॥
अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः ।

करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥१६॥
विभवेऽपि सति त्वया विना सुखमेतावदजस्य गण्यताम् ।
अहृतस्य विलोभनान्तरैर्मम सर्वे विषयास्त्वदाश्रयाः ॥ १७ ॥
विलपन्निति कोशलाधिपः करुणार्थग्रथितं प्रियां प्रति ।
अकरोत्पृथिवीरुहानपि स्रुतशाखारसबाष्पदुर्दिनान् ॥ १८ ॥

—रघुवंशे

---

## नवपञ्चाशः पाठः ।

### परमेष्ठिनः स्तुतिः ।

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ १ ॥
ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ २ ॥
प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ ३ ॥
प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।
अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ ४ ॥
नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ ५ ॥
रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ ६ ॥
अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥ ७ ॥

हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ।
दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥ ८ ॥
सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः ।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ ९ ॥
चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः ।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ १० ॥
अभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ज्योतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥ ११ ॥
अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥ १२ ॥
शब्दादीन्विषयान्भोक्तुं चरितुं दुश्चरं तपः ।
पर्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्तितुम् ॥ १३ ॥
बहुधाऽप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥ १४ ॥
केवलं स्मरणेनैव पुनासि पुरुषं यतः ।
अनेन वृत्तयः शेषा निवेदितफलास्त्वयि ॥ १५ ॥
उदधेरिव रत्नानि तेजांसीव विवस्वतः ।
स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते ॥ १६ ॥
अनवाप्तमवाप्तव्यं न ते किंचन विद्यते ।
लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः ॥ १७ ॥
महिमानं यदुत्कीर्त्य तव संह्रियते वचः ।
श्रमेण तदशक्त्या वा न गुणानामियत्तया ॥ १८ ॥
इति प्रसादयामासुस्ते सुरास्तमधोक्षजम् ।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः ॥ १९ ॥

—रघुवंशे

करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥१६॥
विभवेऽपि सति त्वया विना सुखमेतावदजस्य गण्यताम् ।
अहृतस्य विलोभनान्तरैर्मम सर्वे विषयास्त्वदाश्रयाः ॥ १७ ॥
विलपन्निति कोसलाधिपः करुणार्थग्रथितं प्रियां प्रति ।
अकरोत्पृथिवीरुहानपि स्रुतशाखारसबाष्पदूषितान् ॥ १८ ॥

—रघुवंशे

---

## नवपञ्चाशः पाठः ।

### परमेष्ठिनः स्तुतिः ।

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम् ।
अभिजग्मुर्निदाघार्ताश्छायावृक्षमिवाध्वगाः ॥ १ ॥
ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ २ ॥
प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम् ।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ ३ ॥
प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम् ।
अथैनं तुष्टुवुः स्तुत्यमवाङ्मनसगोचरम् ॥ ४ ॥
नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते ।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ ५ ॥
रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥ ६ ॥
अमेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
अजितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥ ७ ॥

# षष्टितमः पाठः ।

## शिवावतारः

शिवभारतं is written by कवीन्द्र परमानन्द, son of गोविन्दभट्ट in the seventeenth century A. D. He was a Mahārāshtriya and a court-poet of Shivāji, the Mahrāthā King. It contains thirty-two अध्याय' or chapters and is written in the epic style. It is actually called अनुपुराण by the poet in the colophon. It is published by भारत इतिहास संशोधक मंडल of Poona.

जननी शम्भुशिवयोस्तस्य यादवनन्दिनी ।
जग्राह हृदयं पत्युः शुद्धान्ते सुमहत्यपि ॥ १ ॥
हलिना हरिणा चापि वसुदेवो यथान्वहम् ।
व्यराजत तथा शाहः शम्भुना च शिवेन च ॥ २ ॥
स तु शंभोः कनीयांसं गरीयांसं गुणश्रिया ।
बहु मेने महाप्राज्ञः शिवशर्माणमात्मजम् ॥ ३ ॥
यदाप्रभृति संजातः स एष तनयः शिवः ।
तदाप्रभृति शाहस्य समृद्धाः सर्वसम्पदः ॥ ४ ॥
अतिष्ठन् द्वारि बहुशो मन्दराचलसुन्दराः ।
विजिताम्भोदहृद्यो मदवारिमुचो गजाः ॥ ५ ॥
आसन्सहस्रशश्चापि मन्दुरायां मनोहराः ।
वाता इवाशुगतयः सैन्धवाः समरोद्धुराः ॥ ६ ॥
ववृधे चाधिकं कोपस्तापेन सह नित्यशः ।
प्रतापः पप्रथेऽत्यर्थं प्रभावश्च दिने दिने ॥ ७ ॥
दुर्ग्रहाण्यपि दुर्गाणि सुमहत्वं प्रपेदिरे ।

# षष्टितमः पाठः ।

## शिवावतारः

शिवभारतं is written by कवीन्द्र परमानन्द, son of गोविन्दभट्ट in the seventeenth century A. D. He was a Mahārāshtriya and a court-poet of Shivāji, the Mahrāthā King. It contains thirty-two अध्याय' or chapters and is written in the epic style. It is actually called अनुपुराण by the poet in the colophon. It is published by भारत इतिहास संशोधक मंडल of Poona.

जननी शम्भुशिवयोस्तत्र यादवनन्दिनी ।
जग्राह हृदयं पत्युः शुद्धान्ते सुमहत्यपि ॥ १ ॥
हलिना हरिणा चापि वसुदेवो यथान्वहम् ।
व्यराजत तथा शाहः शम्भुना च शिवेन च ॥ २ ॥
स तु शंभोः कनीयांसं गरीयांसं गुणश्रिया ।
बहु मेने महाराजः शिवशर्माणमात्मजम् ॥ ३ ॥
यदाप्रभृति संजातः स एष तनयः शिवः ।
तदाप्रभृति शाहस्य समृद्धाः सर्वसम्पदः ॥ ४ ॥
अतिष्ठन् द्वारि बहुशो मन्दराचलसुन्दराः ।
विजिताम्भोदरुचो मदवारिमुचो गजाः ॥ ५ ॥
आसन्सहस्रशश्चापि मन्दुरायां मनोहराः ।
वाता इवाशुगतयः सैन्धवाः समरोद्धुराः ॥ ६ ॥
ववृधे चाधिकं कोषस्तोषेण सह नित्यशः ।
प्रतापः पप्रथेऽत्यर्थं प्रभावश्च दिने दिने ॥ ७ ॥
दुर्ग्रहाण्यपि दुर्गाणि सुमहान्ति प्रपेदिरे ।